pp. 73-80 (80th inclusive)
missing

ॐ

# संगीतराजः

श्रीराजाधिराजेन्द्र-श्रीकुम्भकर्ण-विरचितः

## तृतीयो वाद्यरत्नकोशः

## प्रथमस्ततोल्लासः

### तत्र एकतन्त्रीलक्षणं नाम प्रथमं परीक्षणम्

यस्मिन् तत्त्वमिदं ततं [१]सुषिरतो बोधश्च तल्लिङ्गतो
[२]यच्चानन्दघनं हृदब्जसुषिरे ध्यायन्ति योगीश्वराः[3] ।
[४]येनानन्तगुणावनद्धमखिलं वेदादिभिर्गीयते
भूयान्नित्यमनश्वरं परमहस्तद्भूयसे श्रेयसे ॥१॥

पुरा पुरारिणा येन [५]त्रिपुरान्तध्वनेः श्रुतेः ।
विततं ततमत्रादौ निर्मितं तन्नमाम्यहम् ॥२॥

पुरा [६]दक्षाध्वरध्वंसोद्वेगिना शम्भुना किल ।
चतुर्धा निर्मितं वाद्यं परनिर्वृतिहेतवे[७] ॥३॥

अथोपपादि नन्द्याद्यैः स्वस्य कौतुकहेतवे ।
तथोपपादितं [८]पूर्वैरपि लोकहितेप्सुभिः ॥४॥

यथाभिहितगीतस्य [९]निदानत्वादिदं पुनः ।[१०]
विवृतं भरताचार्यप्रमुखैः स्वस्वशास्त्रतः ॥५॥

---

[१] A. सुखिरतोद्बोघश्च D. E. मुखरितोद्बोघश्च
[२] A. पंचानन्द० D. यचानन्द० [3] A. योगीश्वरैः
[४] A. ये···तराणानवद्ध० [५] A. त्रिपुरात्र० D. त्रिपुरांत्र०
[६] A. दक्षध्वर० [७] cf. S. R. VI 18, 19. [८] A. स[illegible]रपि
[९] A. निदानित्व० [१०] A piece of paper is pasted on the relevant page of D after this and hence the subsequent portion is illegible.

चतुर्विधं स्मृतं तच्च ततं च सुषिरं तथा ।
घनं [1]चैवावनद्धं च गीतं श्रुत्यादितोऽखिलम् ॥६॥

[2]ततः सुषिराच्चापि जायते मीयते घनात् ।
सह तैरवनद्धेन क्रमतो रज्यतेऽपि च ॥७॥

पुरापि सर्पिणी वाणी देवेभ्यो ब्रह्मसद्मनः ।
वनस्पतीन् विवेशातो दारुरूपा ध्वनन्त्यमी ॥८॥

वीणाभेदा वेणुभेरीमृदङ्गकरटादयः ।
[3]ततः प्रभृति भूपानामभिषेके महोत्सवे ॥९॥

विजयेषु च सर्वेषु विवाहे पुत्रजन्मनि ।
प्रत्यूह-[4]प्रतिघातार्थं शान्तिपौष्टिककर्मणि ॥१०॥

प्रोत्साहनार्थं भीरूणां संग्रामेषु पलायिनाम् ।
वीररौद्ररसप्राये नाटके मङ्गलेषु च ॥११॥

सर्वेषु सर्ववाद्यानि स्वल्पानि स्वल्पमङ्गले ।
यात्रायां देवयात्रायामुत्पाते युद्धभूमिषु ॥१२॥

रङ्गभूमिगतानां तु विश्रान्तिजननाय च ।
गायतां नृत्यतां चापि रन्ध्रपू[र]णहेतवे ॥१३॥

क्वचिद्गीते क्वचिन्नृत्ये स्खलतां तद्विदामपि ।
प्रच्छादनाय तत्रत्यन्यूनतायाः पटूनि च ॥१४॥

वाद्यान्यतः प्रयत्नेन वाद्यविद्याविशारदः ।
[5]कालसेनो यथाशास्त्रमभिधत्तेऽखिलान्यपि ॥१५॥

वीणादिकं तत्र ततं (ततं तत्र) तन्त्रीतननजत्वतः ।
वाद्यते सुषिरेणातो वंशादि सुषिरं मतम् ॥१६॥

मूर्तं यदभिघातेन वाद्यं तालादि तत् (द्) घनम् ।
चर्मावनद्धमानद्धं वाद्यते मुर(र)जादिकम् ॥१७॥

[6]चतुर्विधमिदं प्रोक्तं चतुर्विधमपि पृथक् ।
शुष्कं[7] गीतानुगं नृत्तानुगं [8]वापि द्वयानुगम् ॥१८॥

---

[1] E तथावन॰  [2] cf. S. R. VI 4, 5.
[3] cf. S. R. VI 19-23 for 9-14 above.
[4] D. परिघातार्थं E. ०परिवातार्थं  [5] D. कुम्भकर्णो
[6] cf. S.R. VI 16-18 for 18-20 above.
[7] E. omits अनुस्वार  [8] E. चापि



[1]यद्विना गीतनृत्ताभ्यां तद्वाद्यं शुष्कमुच्यते ।
वीणावंशादयो [2]वाद्यं वाद्यानुगमिहेरितम् ॥१९॥

मृदङ्गतालप्रमुखं[3] नृत्तानुगमुदीरितम् ।
द्वयानुगं [4]तु तत्त्रितयं भवेदन्वर्थनामकम् ॥२०॥

तत्र प्राधान्यमस्माभिर्वीणायाः प्रागुदाहृतम् ।
तत्प्राधान्यात्ततस्यात्र प्रथमं [5]लक्ष्म चक्ष्महे ॥२१॥

*एकतन्त्री च नकुलश्चित्रा चैव त्रितन्त्रिका ।
विपञ्चिका[ऽऽ]लापिनी च वीणा स्यान्मत्तकोकिला ॥२२॥

[6]पिनाकी किन्नरी चैव [7]परा निःशङ्कवीणिका ।
शततन्त्र्याह्वया ज्येष्ठा जयौ-[8]दुम्बरिका [9]तथा ॥२३॥

[10]कूर्मा घोषवती शाङ्गीं वल्लकी त्रिशरीति(?) च ।
अलाबा(बू?) टंकरीसंज्ञा तथा [11]रावणहस्तिका ॥२४॥

अर्धचन्द्रादिका[12] चैव कीर्तिता जनकोऽपि च ।
एतद्वादनभेदाश्च [13]द्विविधा[:] करसारणाः ॥२५॥

[14]श्रुतिस्वरोपाधिभिन्ना तत्र वीणा द्विधा मता ।
श्रुतिवीणा सप्रपञ्चा[ऽ]त्रास्माभिः [15]पुरोदिता ॥२६॥

[16] लक्ष्यते स्वरवीणाथ तत्स्वरूपपुरःसरा[17] ।
[18]अङ्गुष्ठपर्वदैर्घ्यं स्यादङ्गुलं कस्यचिन्मते ॥२७॥

मध्यमाङ्गुलिमध्यस्य मितं मानेन वा भवेत् ।
षड्भिस्तु निस्तुषैस्तुल्यैः सार्धैस्तिर्यग्यवोदरैः[19] ॥२८॥

मितमात्राङ्गुलं यद्वा वाद्यभाण्डमितौ[20] भवेत् ।
वितस्तिस्तैर्द्वादशभिर्द्वे विध(त)स्ती करो[21] भवेत् ॥२९॥

---

[1] A. यदि ना  [2] E. omits वाद्यं
[3] D. omits अनुस्वार  [4] A. omits तु D. E. तु त्रितयं
[5] D. E. लक्ष्य *cf. S. R. VI 9, 10 and III 213-15 for 22-25 above.  [6] A. D. पिन्नाकी  [7] A. पार  [8] E. ० डुबरिका यथा
[9] A ० कास्तथा  [10] A. D. कर्मा  [11] A. ० हस्तका
[12] A. ० काश्चैव  [13] E. द्वितीया
[14] cf. S. R. VI 7.  [15] E. पुरोहिता । vide S. Raj. II 1. 1. 95-115.
[16] A. D. लक्षते  [17] E. adds विसर्ग
[18] cf. S. R. VI 6, 8, 28 for 27, 29 above.
[19] E. ० यवोद्धारे  [20] A. D. मितो  [21] E. कपो

मानेनानेन निर्माणमत्र सर्वत्र कल्पयेत् ।
खादिरः [१]सरलो वृत्तो ग्रन्थिव्रणभिदोज्झितः ॥३०॥

तथैव कांस्यजो वापि रक्तचन्दनजोऽपि[२] वा ।
वितस्तिपरिधिश्लक्ष्णः षड्विध(त)स्तिमिता[ऽ]यतिः ॥३१॥

[3]स्वस्य दैर्घ्यस्य मानेन सुषिरं[४] दधदन्तरा ।
सार्धाङ्गुलपरीणाहमूर्ध्वाधोवदने तथा[५] ॥३२॥

दण्डः स्यादस्य पिण्डस्तु सपादाङ्गुलिसंमितः ।
उत्सेधेन त्र्यङ्गुलेन प्रस्थाकारेण भास्वता ॥३३॥

[६]परिधौ दण्डतुल्येन त्रिभिस्त्रेताग्निवत् स्थितैः ।
कनिष्ठाङ्गुल्यप्रमितैः सुषिरैस्त[द्]द्वयेन वा ॥३४॥

तर्जन्यङ्गुलिमानेन मध्यदेशेन भास्वता ।
[७]स्वर्णादिपरिक्लृप्तेन पिदध्यादूर्ध्वमाननम् ॥३५॥

[८]खादिरं शाकजं वान्यद् दधानं ककुभं वरम् ।
अष्टाङ्गुलायतं[९] तद्वद्विस्तारे [१०]त्र्यङ्गुलं शुभम् ॥३६॥

अङ्गुलाधिकपार्श्वं च मध्ये कूर्मवदुन्नते ।
स्थितेन पत्रिकाधारगर्तेन च समन्वितम् ॥३७॥

गर्तं[११] मध्यस्थरन्ध्रेण त्रिकोणेन समन्वितम् ।
[१२]स्थौल्यात्(द्)रन्ध्रप्रमाणेन धातुना[१३] रचितेन च ॥३८॥

गर्तं[१४] रन्ध्रनिविष्टेन शङ्कुना कीलितं दृढम् ।
दधानं [१५]पत्रिकां श्लक्ष्णां मिश्रलोहमयीं समाम् ॥३९॥

अङ्गुलद्वयविस्तीर्णामायतौ चतुरङ्गुलाम् ।
अधस्ताद् दण्डयुगलं दधानं वर्तुलं समम् ॥४०॥

दण्डरन्ध्रमितं [१६]स्थौल्ये दैर्घ्ये चाष्टाङ्गुलं तथा ।
[१७]अस्याधारस्थितं शङ्कुं दण्डवक्त्रे निवेशयेत् ॥४१॥

---

[१] A. स्वरलो वृत्ता [२] D. E. ० जोऽथवा [3] D. E. स्वल्प०
[४] E. सुखितं [५] cf. S. R. VI 29, 30 for 30-32 above.
[६] cf. S. R. VI 31. [७] A. स्वरवर्णादि०
[८] cf. S. R. VI 32-109 for 36-133 above.
[९] D. ० ङ्गुलाग्रतं [१०] E. अङ्गुलं [११] E. omits अनुस्वार
[१२] A. स्थौलियात् [१३] D. E. धातुभी [१४] D. E. omit अनुस्वार
[१५] A. E. प्रत्रिकां [१६] A. स्थौलिये [१७] D. E. अस्यावर०



यथा श्लिष्यति वीणाया दण्डेन ककुभो दृढम् ।
एवंविधस्य दण्डस्योर्ध्वाप्रादेशे[१] त्वधस्तने ॥४२॥

अङ्गुलैः सप्तदशभिः कुर्याद् रन्ध्रद्वयं समम् ।
तदक्षसदृशं तत्रैकस्मिन् द्विगुणितामृजुम् ॥४३॥

तन्त्री(तन्त्रीं) प्रक्षिप्य यत्नेन तन्त्री[२]-प्रान्तान्तरं पुनः ।
क्षिप्त्वा रन्ध्रेऽन्यत्र च तामाकर्षेद् द्विगुणां दृढम् ॥
पुनरित्थं प्रकुर्वीत यावत्तन्त्री दृढा भवेत्[3] ॥४४॥

षष्ट्यङ्गुलपरीणाहं वर्तुलं च पचेलिमम् ।
[४]छेदने वक्त्रदेशेन द्वादशाङ्गुलविस्तृतम् ॥४५॥

[५]पिण्डतोऽङ्गुलमानेन सुदृढं स्निग्धमूर्तिमत् ।
[६]वृत्तस्थानगता तस्य नाभि(श्)छिद्रसमन्विता[७] ॥४६॥

अङ्गुलत्रितया, यामा(नाभ्या) [ऽ]धोमुखस्थितया[ऽ]नया[८] ।
रन्ध्रवद्दण्डपृष्ठस्थ[९]-पृष्ठया मध्यरन्ध्रया ॥४७॥

युक्तं नाभ्या दधच्चान्त-[१०]र्नालिकेरजकर्परम् ।
मध्यरन्ध्रयुतं नाभिरन्ध्रसंलग्नपृष्ठकम् ॥४८॥

तुम्बं स्यादस्य रन्ध्रे तु तन्त्रीप्रान्तौ निवेश्य तौ ।
खर्परस्थित[११]-रन्ध्रेण तन्त्रीं [१२]निष्कास्य यत्नतः ॥४९॥

वेष्टयेत् कीलके तस्मिन् तं कीलं[१३] भ्रामयेन्मुहुः ।
तावद् याव[द्] दृढो बन्धस्तुम्बस्यैषः(ष)प्रजायते ॥५०॥

धीरैस्तुम्बक[१४]-मुत्तानमित्थं तत्र निबध्यते ।
दण्डे तुम्बोर्ध्वदेशे च दोरकं [१५]श्लक्ष्णसूत्रजम् ॥५१॥

अन्वितं नागपाशेन द्विगुणेन नवं दृढम् ।
श्लक्ष्णां स्नायुमयीं तन्त्रीं बद्धप्रान्तां दृढां घनाम् ॥५२॥

आवेष्ट्य नागपाशेऽस्मिन्नाकर्षेत् पत्रिकोपरि ।
तामावेष्ट्य ततः शङ्कौ काकुभे पत्रिकां[१६] दृढम् ॥५३।

---

[१] E. ० ध्वदिशे [२] D. adds अनुस्वार [3] A. भवे
[४] A. छदने [५] E. पिण्डितो [६] D. E. वृत्ति०
[७] E. ० ताम् [८] D. तया E. तथा [९] E. ० पृष्ठत्व०
[१०] D. E. omit रेफ० [११] E. ० स्थिति० [१२] A. निष्काश्य
D. E. निःकाश्य [१३] A. E. किल [१४] D. E. तुंक०
[१५] E. श्लक्षु० [१६] D. omits अनुस्वार

निबध्नीयात् ततो जीवां समां वेणुमयीं मृदुम् ।
तन्त्रीपत्रिकयोरन्तरङ्गुल[१]-द्वितयायताम् ॥५४॥

यवसंमितविस्तारां नादजीवनहेतवे ।
नादं संजीवयत्येषा यतो जीवा ततः स्मृता ॥५५॥

तामेव च कलां[२] प्राहुस्तन्त्रीपत्रिकयोः[३] कलम् ।
संदिग्धश्लेषतो[४] नादः कलनाद्वा कलां विदुः ॥५६॥

सुवृत्ता त्रिगुणा श्लक्ष्णा दोरिका पक्ववेणुजा ।
द्वादशाङ्गुलदीर्घा त्त कनिष्ठा नखविस्तरा ॥५७॥

मन्द्रस्थान-[५]स्वरज्ञानकारणं[६] सुवलामृजुम् ।
दण्डे तत्र निबध्नीयात्तुम्बकाधोऽङ्गुलत्रये ॥५८॥

एवंलक्षणलक्ष्येयं वीणा स्यादेकतन्त्रिका ।
प्रकृतिः सर्ववीणानामियं यस्मादिमामिमाः[७] ॥५९॥

स्वस्वरूपविनिर्वृत्त्यै भर्ग[भा]गशः पर्युपासते ।
[८]ऐहिकामुष्मिकफला [९]दर्शनात् स्पर्शनादियम् ॥६०॥

ब्रह्महत्यादिपापानि दृष्टा स्पृष्टा व्यपोहति ।
श्रुतिस्मृतीतिहासानामेष घण्टापथो मतः[१०] ॥६१॥

दण्डस्वरूपी भगवान्(ञ्)श(छ)म्भुरस्या मुनेर्गिरा[११] ।
तन्त्रिका पार्वतीरूपा ककुभः कमलापतिः ॥६२॥

पत्रिका कमला ब्रह्मा तुम्बं नाभिः सरस्वती ।
जीवा चकोरजीवातु-[१२]र्दोरिका कोकतुष्टिकृत् ॥६३॥

नागपाशो नागराजस्तस्मादेषापि सर्वदा ।
सर्वदेवमयीत्वेन [१३]सर्वकामफलप्रदा ।६४॥

अथ वादनविन्यासस्तस्याः सम्यक् प्रकाश्यते ।
एतस्या दोरिकादेशो वामस्कन्धे निधीयते ॥६५॥

अधोवक्त्रमधस्तुम्बमूर्ध्वं स्यात् तन्त्रिका यथा ।
[१४]पार्ष्ण्या दक्षिणपादस्य ककुभं धारयेत्ततः ॥६६॥

---

[१] E. adds अनुस्वार । [२] A. कलामप्राहु० [३] E. omits ० कयो:
[४] A. ० श्लेषते [५] A. D. स्तर० [६] E. ० कारणां
[७] D. E ० मिमाम् [८] A. एहिका० D. E. एकाहिका०
[९] A. E. दर्शना० [१०] E. मता [११] E. गिरात्
[१२] A. omits रेफ [१३] E. सकाम० [१४] A. E. पार्ष्ण्यौ



कम्रिकां सव्यहस्तस्य कनिष्ठापृष्ठदेशगाम् ।
कृत्वा[ऽऽ]वेष्ट्यानामिकाया अङ्गुल्याः कुञ्चिताकृतेः ॥६७॥

पार्श्वलग्नां मध्यमायास्तर्जन्या [१]संप्रपीड्य च ।
ऊर्ध्वाधः सारयेद्धीमान् [२]सम्यक्(ङ्)नादस्य सिद्धये ॥६८॥

कम्रिका सारणे [३]त्यक्ता सारणात्तन्त्रिकोपरि ।
अयं यः सव्यहस्तस्य न्यासः प्रोक्तो मयामलः ॥६९॥

स मन्तव्यः सारणाया(यां[४]),बुधैर्धारणकर्मणि ।
न्यस्तव्यो दक्षिणो हस्तः कलातो द्वादशाङ्गुले ॥७०॥

तन्त्र्यां स्वरानुबन्धेन सम्यगूर्ध्वमधस्तथा ।
सारयेच्च[५] तमन्यत्रोपरिवाद्याद् विदांवरः ॥७१॥

नोर्ध्वं वक्ष[:]स्थलान्नेयः, [६]कम्रिकायाः क्रिया पुनः ।
सारणेत्युच्यते सा तु चतुर्धा परिकीर्तिता ॥७२॥

उ[त्]क्षिप्ता[ऽऽ]द्या [७]सन्निविष्टा चोभयी[८] कम्पितेति च ।
[९]उत्प्लुत्य या परित्यज्य स्पृष्टां स्पृष्टां तु तन्त्रिकाम् ॥७३॥

याति तन्त्र्यन्तरं या तु [१०]सोत्क्षिप्ता सारणा भवेत् ।
भङ्ग्यन्तरेण [११]स्पृष्ट्वैव तन्त्रीं[१२] यत्रापसर्पति ॥७४॥

सा सन्निविष्टा भणिता सारणा [१३]कृष्णभूभुजा ।
क्वचिदुत्क्षिप्तिकारूपा क्वचित् स्यात् सन्निविष्टिका ॥७५॥

एवं क्रियाद्वयं या तु संस्पृशेत् सोभयी मता ।
कम्रिकायाः कम्पनेन स्वरस्थानेषु कम्पिता ॥७६॥

[१४]घातः पातश्च संलेख उल्लेखश्चावलेखकः ।
भ्रमरः [१५]सन्धितश्छिन्नो नखकर्तरिकेत्यमी ॥७७॥

व्यापारा वैणिकैः ख्याता नव दक्षिणहस्तजा[:] ।
स्फुरितः खशि(सि)तश्चेति द्वयं स्याद् वामहस्तजम् ॥७८॥

---

[१] A. संपीड्य [२] E. सम्यग् [३] A. looks like त्फक्ता
[४] D. E. सारणे या [५] D. सारयेत्तच० E. सारयेत्तञ्च०
[६] A. कम्बिकायाः [७] D. E. सन्निकृष्टा
[८] A. चोभय D. E. चोभयि [९] D. E. उत्पुत्य
[१०] D. E. सात्क्षिप्ता [११] E. स्पृष्टेव [१२] A. E. तन्त्री
[१३] D. E. कुंभ० [१४] E. घाताः पाताश्च [१५] A. D. सन्वितः छिन्नो

घोषो बिन्दुश्च रेफश्च मूर्छना शुकवक्त्रकः[1] ।
[2]निष्कोटितोर्ध्वचन्द्रश्च स्खलितश्चार्धकर्तरी ॥७९॥

प्रसारः कुहरश्चैव तलहस्तश्च कर्तरी ।
उभयोः करयोरेते व्यापारा[ः][3]स्युस्त्रयोदश ॥८०॥

[4]पाण्योरपि भवन्तीह नामान्येतानि तत्त्वतः ।
अथ लक्षणमेतेषामुच्यते [5]कृष्णभूभुजा ॥८१॥

तन्त्रिकां[6] हन्ति यद्यत्र मध्यमाक्रान्ततर्जनी ।
वैरिणां घातदक्षेण तदा[ऽऽ]घात इतीरितः ॥८२॥

॥ इति घातः ॥१॥

[7]आहन्ति तन्त्रिकां गाढं तर्जनी केवला यदा ।
वैरिणां दुर्गपातज्ञस्तदा पातमिहाब्रवीत् ॥८३॥

॥ इति पातः ॥२॥

अन्तर्यदा समाहन्ति तर्जनी तन्त्रिकामिह ।
तदा वैणिकवर्येण राज्ञा संलेख ईरितः ॥८४॥

॥ इति संलेखः ॥३॥

तन्त्रिका[8]-मन्तराहन्ति मध्यमा केवला यदि ।
प्रज्ञोल्लेखविशेषज्ञस्तदोल्लेखमिहाभ्यधात् ॥८५॥

॥ इत्युल्लेखः ॥४॥

मध्यमा बहिराहन्ति केवला तन्त्रिका(कां[9]) यदा ।
तदा[ऽ]वलेख इत्युक्तो वैणिकग्रामभूभृता ॥८६॥

॥ इत्यवलेखः ॥५॥

आहुः संलेखावलेखावन्यांङ्गुल्यापि केचन ॥८७॥

॥ इति वा[10] संलेखावलेखौ ॥

चतस्रोऽङ्गुलयो यत्र घ्नन्त्यन्तस्तन्त्रिकां यदा ।
क्रमात्शी(च्छी)घ्रं तदा प्राह[11] भ्रमरं भ्रमवर्जितः ॥८८॥

॥ इति भ्रमरः ॥६॥

मध्यमा[ऽ]नामिके तन्त्री(न्त्रीं) बहिर्यद्याहतः क्वचित् ।
तदा वैणिकवृन्देशः सन्धितं वक्ति भूपतिः ॥८९॥

॥ इति सन्धितः ॥७॥

---

[1] A. ० वक्त्रतः [2] A. निकुट्टितो० D. निःकूटितो० E. कूटितो०
[3] D. व्यापारास्तु [4] D. E. पाण्यै०
[5] D. E. कुंभ [6] A. तन्त्रिका
[7] A. D. अहन्ति [8] A. तन्त्रिकां [9] A. तान्त्रिका
[10] A. E. omit वा [11] D. E. प्राहु (D. ० भ्रंमरं)



तर्जनीपार्श्वसंलग्ना तन्त्रिका नाम या यदा ।
बहिराहन्यते प्राह तदा छिन्नमच्छिन्नधीः ॥९०॥

॥ इतिच्छिन्नः ॥८॥

चतुर्भि-[1]र्नखरैर्यत्र शीघ्रं दक्षिणहस्तजैः ।
क्रमादाहन्यते तन्त्री तदा स्यान्नखकर्तरी ॥९१॥

॥ इति नखकर्तरी ॥९॥

॥ इति नवदक्षिणहस्तव्यापाराः ॥

तन्त्रिकापृष्ठसंश्लिष्टा सारणा यत्र कम्पते ।
तदा स्फुरित इत्युक्तो विस्फुरन्मतिशालिना ॥९२॥

॥ इति स्फुरितः ॥१॥

मुहुः[2] प्रघर्षणे तन्त्र्याः[3] खसितः कम्रिकाकृते[4] ॥९३॥

॥ इति खसितः ॥२॥

॥ इति [5]वामहस्तव्यापारद्वयम्[6] ॥

कनिष्ठाकम्रिकाभ्यां वा यत्र तन्त्री प्रहन्यते ।
कर्तरी चाङ्गुष्ठपार्श्वलग्ना वा[7] घोषकस्तदा ॥९४॥

॥ इति घोषः ॥१॥

बहिर्दक्षानामिकयाघातात्तन्त्रीभवो ध्वनिः ।
धार्यते वामतर्जन्या यदा बिन्दुस्तदा भवेत् ॥९५॥

॥ इति बिन्दुः ॥२॥

दक्षिणानामया तन्त्री यदान्तः संप्रहन्यते ।
वाममध्यमया बाह्ये रेफो नाम भवेत्तदा ॥९६॥

॥ इति रेफः ॥३॥

उद्वेष्टपरिवर्ताभ्यां करे भ्राम्यति दक्षिणे ।
स्वरस्थाने द्रुतं तन्त्र्यां[8] कम्पिता यत्र सर्पति ॥
कम्रिका, मूर्छनासंज्ञ(ः)[9] करोऽसौ कीर्तितो बुधैः ॥९७॥

॥ इति मूर्छना ॥४॥

स करः शुकवक्त्र(ः)स्याद्यत्र तन्त्र्या (तन्त्र्यां) प्रतन्यते ।
तर्जन्यङ्गुष्ठयोः क्षिप्रमग्रभागेन कर्षणम् ॥९८॥

॥ इति शुकवक्त्रः ॥५॥

---

[1] A. नखरै० [2] A. E. omit विसर्ग
[3] A. D. omit विसर्ग [4] A. D. add विसर्ग
[5] D. E. ० हस्तस्य [6] A. व्यापारा० [7] E. omits वा
[8] E. reads आकम्पिता for तन्त्र्यां कम्पिता [9] A. ० संज्ञो D. E. संज्ञा

यत्र प्रदेशिनी तन्त्रीं[1] हन्ति सारणया विना ।
स [2]निष्कोटित इत्युक्तो वीणापथविवेकिना ॥९९॥

॥ इति निःको(निष्को)टितः ॥६॥

कनिष्ठाङ्गुष्ठौ [3]स्पृशतो यत्र तन्त्रींसहैव नु ।
अर्धचन्द्रं[4] तदा प्राह पूर्णचन्द्रनिभाननः ॥१००॥

॥ इत्यर्धचन्द्रः ॥७॥

हन्ति [5]वामकरस्तन्त्रीं क्षिप्रमुत्क्षिप्य कन्त्रिकाम् ।
कर्तरीदक्षिणः [6]पाणिर्यत्रासौ स्खलितो[7] भवेत् ॥१०१॥

॥ इति स्खलितः ॥८॥

कर्तरीं[8] कुरुते हस्तो दक्षिणो, यत्र तन्त्रिकाम् ।
हन्ति सारणया वामः, प्राह तामर्धकर्तरी(म्) ॥१०२॥

॥ इत्यर्धकर्तरी ॥९॥

तले संकुचिताङ्गुष्ठे चतुरङ्गुलिसंहतौ ।
कनिष्ठातर्जनीपार्श्वस्पर्शस्तन्त्र्याः प्रसारकः ॥१०३॥

॥ इति प्रसारः ॥१०॥

साङ्गुष्ठाङ्गुलयो यत्र किंचिदाकुञ्चितीकृताः ।
कनिष्ठाङ्गुष्ठसंस्पर्शात्तन्त्र्याः[9] कुहर उच्यते ॥१०४॥

॥ इति कुहरः ॥११॥

तलेन दक्षिणो हन्ति तन्त्रिकां यत्र तां पुनः ।
वामः[10] स्पृशति[11] तर्जन्या तलहस्तस्तदा भवेत् ॥१०५॥

॥ इति तलहस्तः ॥१२॥

चतस्रोऽङ्गुलयो यत्र क्रमेण करयोर्द्वयोः ।
घ्नन्ति तन्त्रीं[12] द्रुतं बाह्ये[13] कर्तरी कीर्तिता तदा ॥१०६॥

॥ इति कर्तरी ॥१३॥

॥ इति त्रयोदशोभयहस्तव्यापाराः ॥

त्रिः(त्रि)प्रकारा मया प्रोक्ता ये हस्ताः समवायतः ।
तेषां वादनविन्यासो[14] वाद्यमित्युच्यते बुधैः ॥१०७॥

---

[1] A. E. omit अनुस्वार [2] A. निःकोटत D. E. निःकोटित
[3] A. स्पृश्यतो D. E. स्पृष्टतो [4] A. E. omit अनुस्वार
[5] D. E. वाककर० [6] A. पाणियत्रासौ [7] A. स्खलिता
[8] A. E. omit अनुस्वार [9] A. E. omit विसर्ग
[10] A. E. वाम D. वामा [11] A. स्पृश्यति
[12] A. E. omit अनुस्वार [13] D. E. बाह्यो [14] A. ० न्यासे



तद्यथा क्रमतः(तश्)छन्दस्ततो धारा च [1]कंकुटी ।
कङ्कालं च तथा वस्तुसंज्ञकं च द्रुताभिधम् ॥१०८॥

गजलीलं दण्डकं चोपरिवाद्यमतः परम् ।
तथा [2]पक्षिरुतं वाद्यमित्थं दशविधं च तत् ॥१०९॥

बहुधा यत्र [3]वर्तेते खसितस्फुरितौ करौ ।
तारस्थानस्पृशौ स स्याच्छन्दो यतिविभूषणः ॥११०॥

॥ इतिच्छन्दः ॥१॥

धारा सा[ऽ]नुपदं यस्यामुत्क्षेपपरिवर्तकौ
कर्तरी-रेफसंज्ञौ च तथैवोल्लेखरेफकौ ॥
मूर्छना-स्खलितौ वेति केऽप्यूचुरिह[4] तद्विदः ॥१११॥

॥ इति धारा ॥२॥

कंकुटी[5] सा तु विज्ञेया यत्र ते क्रमतः कराः ।
शुकवक्त्रः स्फुरितको घोषः[6] स्यादर्धकर्तरी ॥११२॥

॥ इति कंकुटी[7] ॥३॥

कङ्कालं तद्भवेद् वाद्यं यत्र [8]स्फुरितसंभ्रमः ।
मूर्छत् सन्मू(संमू)र्छनं भूयः कर्तरी-त्रिकसंयुतम् ॥११३॥

॥ इति कङ्कालम् ॥४॥

[9]तद् वाद्यं वस्तुसंज्ञं स्याद् यत्रैते क्रमतः कराः ।
कर्तरी खसितश्चैव कुहरस्तारसंस्पृशः ॥११४॥

॥ इति वस्तु[10] ॥५॥

क्रमेण कर्तरी यत्र खशि(सि)तः कुहरस्तथा ।
रेफश्च भ्रमरो घोषस्तद्वाद्यं द्रुतमुच्यते ॥११५॥

॥ इति द्रुतम् ॥६॥

भूरिशो[11] मूर्छनायुक्तं कर्तरीस्फुरिताकुलम् ।
खसितश्चैव तद्वाद्यं गजलीलमुदाहृतम् ॥११६॥

॥ इति गजलीलम् ॥७॥

स्खलितो[12] मूर्छना चैवं कर्तरी रेफसंज्ञकः ।
खसितश्चेति यत्र स्युस्तद्वाद्यं दण्डकं विदुः ॥११७॥

॥ इति दण्डकम् ॥८॥

---

[1] A. कौटुकी D. E. केकुटी [2] E. पक्ष०
[3] A. वर्त्येते E. वतंते [4] E करिह [5] A. कोकुटी
[6] A. omits विसर्ग [7] A. D. कौकुटी [8] D. E. स्फुरति
[9] A. तदाद्यं [10] A. adds विसर्ग [11] D. E. भूरिभिर्मू०
[12] A. E. स्खलितौ

विक्षेपपरिवर्त्ताभ्यामुपेतं केचिदूचिरे ।
मूर्च्छनास्खलिताभ्यां च दण्डकाख्यं विनाकृतम् ॥११८॥

॥ इति वा दण्डकम् ॥८॥

रेफः कर्तरिका [1]निष्कोटितश्च तलहस्तकः ।
ऊर्ध्वाधोगामिना(नो)यत्र तत् स्यादुपरिवाद्यकम् ॥११९॥

॥ इत्युपरिवाद्यम्[2] ॥९॥

यत्रैते सकला हस्ताः क्रियन्ते बहुधा क्रमात् ।
तत्पक्षिरुतमित्युक्तं वाद्यं विद्यावतांवरैः ॥१२०॥

॥ इति पक्षिरुतम् ॥१०॥

॥ इति दशविधं वाद्यम् ॥

एतद् वाद्यं द्विधा ज्ञेयं सकलं निष्कलं तथा ।
तदेतत् सकलं ज्ञेयं यत्र संजायते ध्वनिः ॥१२१॥

तन्त्रीसंलग्नजीवाया[3] मेघगर्जितसन्निभः ।
अपरे[ऽ]परथा[ऽ]प्याहुः सकलं तद्यथोच्यते ॥१२२॥

[4]सार्यंते कम्रिका यत्र तर्जनीस्पर्शवर्जितम् ।
तद्वाद्यं सकलं ज्ञेयं दोरिका-पत्रिकावधि ॥१२३॥

॥ इति सकलम् ॥

निषादस्वरतो नादः[5] कम्रिका यत्र सार्यते ।
स्पृशेत् प्रदेशिनी तन्त्रीं[6] कलां(ला) यत्रापनीयते ॥१२४॥

बिन्दुनिष्पत्तये वाद्यं तदुक्तं निष्कलं बुधैः ।
तर्जनी-कम्रिका-त्यागात्[7] सूक्ष्मो नादोऽत्र जायते ॥१२५॥

कम्रिकासारणामत्र[8] केचिदामध्यम[9]-स्वरम् ।
अवोचन्निति संप्रोक्तं वाद्यं निष्कलसंज्ञकम्[10] ॥१२६॥

॥ इति निष्कलम् ॥

इत्येकतन्त्रीवीणेयं मया प्रोक्ता यथामति ।
श्रुत्यादिक्रमतो गीतनिष्पत्तिरिह दृश्यताम् ॥१२७॥

शिक्षाभ्यासवशादत्र जायते श्रुतिधीरपि ।
विभागात् स्वरदेशानां यथास्वमिह तत्त्वतः ॥१२८॥

---

[1] A. निष्कटित० E. निष्कोडित० [2] D. E. ० वाद्यकम्
[3] D. E. ० जीवातो [4] E. omits this verse and the next one.
[5] A. omits विसर्ग [6] A. omits अनुस्वार [7] A. त्यागा सोक्ष्मो
[8] A. D. ० सारिणा मात्रः E. सारिणामात्र [9] A. D. add विसर्ग
[10] D. E. ० संज्ञितम्



एवंकृते स्वरग्राममूर्छनाद्यपि बुध्यते ।
अष्टादशाङ्गुले वंशे प्रथमे सप्तके मया ॥१२९॥

वक्ष्यते स्वररन्ध्राणां यत्स्थानं तदिह स्फुटम् ।
स्वराणामपि विज्ञेयं किंत्वारोह्याद्विवर्णगा[1] ॥१३०॥

[2]अधराधरता पूर्वमेवेह [3]प्रतिपादिता ।
मध्यमे सप्तके चैव तृतीये सप्तकेऽपि च ॥१३१॥

द्विगुणं द्विगुणं ज्ञेयं पूर्वस्मादुत्तरोत्तरम् ।
एवमत्र स्वरस्थानान्यङ्गानि(न्यङ्क्यानि)प्राज्ञसत्तमैः ॥
[4]कालसेननृपाधीशोपदेशं प्राप्य युक्तितः ॥१३२॥

एतस्या अभिधाद्वन्द्वं जनको घोषकस्तया ।
यतो तयोर्न भिन्ने[5] स्तो लक्ष्मणी [6]लक्ष्मवर्त्मनि ॥१३३॥

॥ इत्येकतन्त्री-लक्षणम् ॥

येनैकतन्त्री क्रियते सर्वोर्वीशपरिग्रहः ।
[7]तेनैकतन्त्री गदिता श्रोतुः पापापनुत्तये ॥१३४॥

इति श्रीराजाधिराज-महीमहेन्द्र[8]-श्रीकालसेनेन[9] विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे ततोल्लासे एकतन्त्रीलक्षणं प्रथमं परीक्षणं[10] समाप्तम् ॥

---

[1] D. E. वर्णना (ता?) [2] A. अधराधता D. अधराधर्ता
[3] E. प्रतिपाद्यतो [4] D. E. कुम्भकर्ण० [5] D. E. भिन्नो
[6] D. लक्ष० E. लक्ष्य० [7] A. D. तेनक०
[8] D. E. ० कुम्भकर्णमहीमहेन्द्रेण
[9] D. E. omit कालसेनेन [10] A. omits परीक्षणम्

# नकुलादि नाम द्वितीयं परीक्षणम्

न कुलं कलितं यस्याकलस्य कलनाविदा[१] ।
नमस्तस्मै कुलाचारसमयाकलितात्मने ॥१॥

नकुलत्रितन्त्रिके[२] स्यातां द्वित्रितन्त्रिकले क्रमात् ।
दण्डाग्रतो तयोस्त्यक्ता(क्त्वा)मुष्टिद्वन्द्वमतःपरम् ॥२॥

तुम्बस्य बन्धनं कार्यमेकतन्त्रीवदेतयोः ।
राजोपदेशतः कार्यं स्वररागप्रकाशनम् ॥३॥

कार्यं कोणेन विदुषा केचिदत्र [3]प्रचक्षते ।
त्रीणि तुम्बानि तिस्रश्च तन्त्र्यो मन्द्रादिषु त्रिषु ॥४॥

स्थानेषु युक्तिमाश्रित्य बन्धनीयाः प्रयत्नतः ।
शार्ङ्गी गन्धर्ववीणा च पद्मवीणा स्वराङ्गिका[४] ॥५॥

नादवेदी श्रुतिपतिरिति देशीविदो विदुः ।
षड्वीणा दण्डमानं तु क्रमादासां निरूप्यते ॥६॥

दण्डमानं तु नकुले मुष्टय(:)स्युस्त्रयोदश ।
त्रितन्त्रिकायामुद्दिष्टमेकादश च मुष्टयः ॥७॥

शाङ्गर्यादित्रिषु वीणासु स्यात् तुम्बद्वितयं तथा ।
तन्त्रीत्रये दण्डमानं सार्धाः [५]स्युर्दशमुष्टयः ॥८॥

स्वराङ्ग्यां तुम्बमेकं तु तन्त्रीणां त्रितयं तथा ।
दण्डमानमथास्यां तु सार्धाः[६] [७]स्युर्दशमुष्टयः ॥९॥

दण्डमानं नादवेद्यां [८]सपादा [९]दशमुष्टयः ।
तिस्रस्तन्त्र्यस्तुम्बके [१०]द्वे तथा श्रुतिपतिर्भवेत् ॥१०॥

---

[१] D. E. विना

[२] D. E. ० तन्त्र्यौ स्यातां The reading of A. contains one extra syllable in the first foot, but it has been given preference on account of its metrical flow.

[3] E. चक्ष्यते [४] D. E. स्वरङ्गिका [५] E. स्याद्दशमुष्टयः

[६] A. D. omit विसर्ग [७] D. स्याद्दश० E. स्यादश०

[८] A. संपदा [९] A. ० तुष्टयः

[१०] D. ० स्तंस्तुम्बके E. omits ० स्तंत्र्य०



दशमुष्टिमिता दण्डे त्रितन्त्र्येककतुम्बिका ।
[१]चित्राः स्यात् सप्ततन्त्रीभिर्नवभिः[२] स्याद् विपञ्चिका ॥११॥

न तत्र विस्तरः[3] कार्यो नाति(स्ति)यल्लोकवर्त्मनि ।
[४]कोणाङ्गुलीभ्यामनयोर्वादनं तद्विदो विदुः ॥१२॥

चित्राङ्गुलीवादनीया कोणवाद्या विपञ्चिका ।
इति व्यवस्थामनयोर्वादने केचनाभ्यधुः ॥१३॥

अथालापविदग्धेनालापिनी [५]लक्ष्यते स्फुटा ।
सार्धहस्तो भवेद् दण्डो वैणवः खादिरोऽथवा ॥१४॥

सुवृत्तः सरलः श्लक्ष्णो ग्रन्थिव्रणभिदोज्झितः ।
स्वदैर्घ्यमानत(:)श्लक्ष्णं सुषिरं दधदन्तरा ॥१५॥

*द्वित्राङ्गुलपरीणाहो मध्ये[६] कूर्मवदुन्नतम् ।
यवद्वयमितं पिण्डे दैर्घ्ये द्व्यङ्गुलसम्मितम् ॥१६॥

विस्तारेऽङ्गुलमात्रं तु ककुभं दधदुन्मुखम् ।
[७]कोलामलकतुल्येन [८]रन्ध्रेणाधो विभूषितम् ॥१७॥

दण्डवक्त्रप्रविष्टेन[९] [१०]स(सु)श्लक्ष्णेन समेन च ।
चतुरङ्गुलदैर्घ्येण शङ्कुना च विराजितम् ॥१८॥

पत्रिकारहितं तस्मिन् दण्डस्याग्रान्निबध्यते ।
षडङ्गुलानि संत्यज्य तुम्बमष्टादशाङ्गुलम् ॥१९॥

[११]परीणाहे वक्त्रदेशे चतुरङ्गुलसम्मितम् ।
तदन्तरा भवेन्नाभिर्दन्तिदन्तविनिर्मिता ॥२०॥

[१२]हेमादिरचिता वा स्यात् समा तालफलाकृतिः ।
नागपाशेन बध्नीयात् तुम्बादूर्ध्वं तु दोरकम् ॥२१॥

तत्र मेषान्त्रजां तन्त्रीं पट्टसूत्रमयीमयो[१3] ।
कार्पाससूत्रजां [१४]वाथ नागपाशे निवेश्यताम् ॥२२॥

---

[१] cf. S. R. VI 110–12 for 11–13 above.

[२] A. D. omit विसर्ग [3] A. विस्मयः [४] D. गीणां० E. गौणां०

[५] A. क्षते D. लक्षते * cf. S. R. VI 241–56 for 16–37 above.

[६] D. E. मध्य [७] D. E. कालामलक० [८] D. E. दण्डेनाधो०

[९] D. E. ० प्रवेशेन [१०] E. सुश्लिक्ष्येण [११] D. परिणाहे

[१२] E. ह्रोमादि० [१3] A. D. ० मथं E. ० मये [१४] D. E. वास्मिन्

आकृष्य [१]ककुभस्याधः कीलके साधु वेष्टयेत् ।
दशमुष्टिमितं दण्डमस्याः केचिद् बभाषिरे ॥२३॥

रक्तचन्दनजो दण्डः सर्ववीणासु [२]वेष्यते ।
अन्याभ्यो भेदकं प्राहुरस्यामेतत्त्रयं विदः ॥२४॥

ख(क)पंरं [३]नारिकेरस्य पत्रिका वेणुदोरिका ।
त्रीण्येतानि [४]निबध्यन्ते बुधैरस्यां कदाचन ॥२५॥

उपवक्ष(:)स्थलं तुम्बमधोवक्त्रं निधाय च ।
वामाङ्गुष्ठेन तस्याथ मलमुत्पीडच यत्नतः ॥२६॥

धृत्वा तां मध्यमाङ्गुल्या दक्षस्यानामया[ऽ]थवा ।
बिन्दुहस्तेन वा बिन्दुधातुवद् वादयेत् सुधीः ॥२७॥

[५]मन्द्रे मध्ये तथा तारे स्वरव्यक्तिर्यथा भवेत् ।
तस्यां[६] दक्षिणहस्तस्य तर्जन्याद्यङ्गुलित्रयात् ॥२८॥

त्रयः स्वरा[:] स्युः षड्जाद्या मध्यमाद्याः स्वरा[:] पुनः ।
चत्वारो वामहस्तस्य तर्जन्यादिचतुष्टयात् ॥२९॥

[७]इति केचित् स्वरव्यक्तिमन्यथा मन्वते बुधाः ।
षड्ज[:] स्यान्मुक्तया तन्त्र्या तर्जन्या ऋषभस्वरः ॥३०॥

गान्धारं मध्यमा सूते ततो दक्षिणपाणितः ।
मध्यमो मुक्तया तन्त्र्या पञ्चमस्तर्जनीभवः ॥३१॥

धैवतः स्यान्मध्यमया निषादस्तु कनिष्ठया ।
वामहस्तस्थया केचिदूचुरुक्तप्रकारतः ॥३२॥

वामहस्तस्य तर्जन्याद्यङ्गुलीभिः स्वरोदयम् ।
स्युरारोहावरोहाभ्यां सप्तकद्वितये स्वराः ॥३३॥

गृहीत्वा[ऽऽ]लापिणीं[नीं] वीणां स्वरैरेतैः प्रयुक्तितः ।
आलापे द्विविधं रागकदम्बं[८] चित्रधातुकम् ॥३४॥

नाङ्गुलीनियमो ज्ञेयो [९]रागालापनकर्मणि ।
उक्तस्तत्र मतङ्गाद्यैः स्वराणां नियमो यतः ॥३५॥

---

[१] A. E. ककुभस्यास्याधः [२] D. E. चेष्यते
[३] D. E. नालिकेरस्य [४] E. न बर्ध्येते
[५] A. मन्द्रमध्ये [६] D. E. omit अनुस्वार [७] D. E. इह
[८] A. कमधं [९] D. रागालपन०



गायेद् गीतं निबद्धं च [१]यतितालल्यान्वितम् ।
केचिदत्र स्वरोत्पत्तिं वदन्त्यविदितक्रमाः ॥३६॥

करद्वन्द्वाङ्गुलीचारप्रचारणवशानुगाम् ।
[२]लोकदुष्टतया तच्च तन्मतं नाद्रियामहे ॥३७॥

॥ इत्यालापिनीलक्षणम् ॥

[३]दण्डः पिनाक्यां धनुषः स पञ्चाङ्गुलसम्मितः ।
सार्धहस्तो भवेद् दैर्घ्ये स्यात् सपादाङ्गुलिद्वय[म्] ॥३८॥

[४]मध्यविस्तारतस्तस्मिन् शिखान्ते स्यादधस्तनीम्(नी) ।
आयामेऽङ्गुलिमानेन सपादाङ्गुलिसम्मिता[५] ॥३९॥

अस्मिन्नूर्ध्वा [६]शिखा प्रोक्ता सपादाङ्गुलपिण्डकौ ।
कर्तव्यौ ख(खे)टकौ स्यातां दैर्घ्ये चाङ्गुलसम्मितौ ॥४०॥

[७]पादोनाङ्गुलमानौ वा संलग्नौ निकटे तयोः ।
तुम्बके चरणन्यूनाङ्गुलद्वन्द्वमुपान्तयोः ॥४१॥

विस्तारे धनुषो मानं बध्नीयाच्छिखयोर्गुणम् ।
कोणोऽन्यो वादनाय स्यादङ्गुलान्येकविंशतिः ॥४२॥

पादोनमङ्गुलं मानमायामे [८]त[च्]छिखाद्वयम् ।
त्यक्ता(क्त्वा) शिखाद्वयस्यान्ते त्रि(तृ)तीयांशोनमङ्गुलम् ॥४३॥

मुष्टिरस्य भवेत् सोऽथ विस्तारे त्र्यङ्गुलो भवेत् ।
अश्ववालधिकेशो[त्]थो गुणः कोणस्य कल्प(ल्प्य)ते ॥४४॥

पद्भ्यामाक्रम्यते तुम्बं भुवि [९]न्यस्तमधोमुखम् ।
स्कन्धस्योर्ध्वा [१०]पिनाकी या त[च्]छिखा, तत्र संश्रितम् ॥४५॥

तुम्बमूर्ध्वमुखं वामहस्तेनाक्रम्य तद्गुणम् ।
[११]दक्षहस्तस्थधनुषो रालासंलिप्तया ज्यया ॥४६॥

---

[१] A. यदि [२] A. लोकदृष्ट०
[३] cf. S. R. VI 402–17 for 38–57 above.
[४] A. ० विस्तातर० [५] E. ० सम्मिताम् [६] A. खिखा
[७] A. पादा० E पादौ [८] A. omits त०
[९] A. adds नि० before न्य० E. ०मघोमुखः [१०] E. पिनीकीयात्
[११] E. ० हस्तश्च

वादयेन्निपुणश्चास्यां[1] स्वरस्थानानि कल्पयेत् ।
एकतन्त्रीवदधराधरतारतया[2] बुधः ॥४७॥

पिनाकीलक्षणं प्रोक्तं पिनाकीपदसेविना ॥४८॥

॥ इति पिनाकीलक्षणम् ॥

अथोच्यते मया सम्यग्वीणा निःशङ्कसंज्ञिका ।
रक्तचन्दनजा सा स्या[च्]छाकदारुभवा[ऽ]थवा ॥४९॥

षट्त्रिंशदङ्गुले काष्ठेऽधस्थे[ऽ]न्यस्मिन्निबध्यते ।
स्थौल्येनालपनीतुल्ये प्राप्रा[त्]त्यक्ता(क्त्वा)[ऽ]ङ्गुलद्वयम् ॥५०॥

तन्त्री, [3]ततस्त्वधस्ताच्च बध्नीयात्तुम्बकं दृढम् ।
[4]बन्धप्रान्तातिरिक्तोंऽशो तन्त्री दैर्घ्ये[5] चतुष्करा ॥५१॥

उपरिस्थे क्वचित् काष्ठे प्रान्तेनैकेन केनचित् ।
प्रान्तान्तरेण बध्नीयाद् दारु तत् कुञ्चिताकृतौ ॥५२॥

भूलग्नबाह्यपार्श्वायां जङ्घायां वामपार्श्वतः ।
वामोरुमूलाक्रान्ताग्रं न्यस्याक्रम्य तु जङ्घया ॥५३॥

वामादितरया तस्य(स्यां)पिनाक्यामिव वादनम् ।
धनुषा वामहस्तस्थतुम्बकेन च सारणा ॥५४॥

आर्द्रचर्मकृतां पेशीं शुष्कां कोणयुतां स्वराम् ।
वामेनादाय हस्तेन तत्कोणेनाथवा भवेत् ॥५५॥

सारणा यत्र वीणासौ त्रिस्थानस्वरहेतुतः ।
[6]त्रिस्थानरागव्यक्त(क्त्य)र्थं [7]कृष्णभूपेन कीर्तिता ॥५६॥

इति निःशङ्कमल्लेन वीणा निःशङ्कसंज्ञिका ।
निःशङ्कमतविज्ञेन [8]निःशङ्कं निश्चलीकृता ॥५७॥

॥ इति निःशङ्कवीणा ॥

वितस्तिसम्मितो दैर्घ्ये दण्डो[9] रावणहस्तके ।
पञ्चाङ्गुलपरि(री)णाहो व्याप्तं(प्त्यं)कमुखरन्ध्रयुक् ॥५८॥

---

[1] A. ० श्चासां E. ०श्चास्या [2] D. E. तारयता [3] A. D. ० स्तत०
[4] S. R. बध्य० (VI. 412) [5] A. दैर्घ्यं
[6] E. omits this line and the next one. [7] D. कुम्भ०
[8] E.……त्रिण निःशङ्कं [9] D. E. दण्डे



अग्रादङ्गुलदेशे[ऽ]त्र[1] शङ्क्वर्थं सुषिरं भवेत् ।
तदूर्ध्वं तन्त्रिकारन्ध्रं[2] पूर्ववत् परिकल्पयेत् ॥५९॥

दशाङ्गुलायतां कम्रां चतुरङ्गुलमानताम् ।
रन्ध्रे प्रविश्यावशिष्टां नालिकेरस्य खर्परे ॥६०॥

तिरश्चीनोभयमुखे रन्ध्रविन्यस्ततन्मुखे ।
बध्नीयात् सुदृढीकृत्य नादनिष्पत्तिहेतवे ॥६१॥

[3]खर्परस्योर्ध्व[4]-रन्ध्रे तु चतुरङ्गुलविस्तृते ।
शुष्क[5]-चर्मावपिहिते जीवां संस्थाप्य वैणवीम् ॥६२॥

[6]तिर्यग्रन्ध्रविनिर्यातां[7] कम्राग्रे बन्धये[द्] दृढम् ।
कम्रिका [8]गवलोत्था स्याद् यद्वा वेणुसमुत्थिता ॥६३॥

अश्ववालकृतां तन्त्रीं तत्रैवाबध्य सारयेत् ।
रन्ध्रे प्रविश्य[9] तां तन्त्रीं योजये[च्]छङ्कुना दृढम् ॥६४॥

यावत्तन्त्री दृढा तावत्तं शङ्कुं भ्रामये[च्]छनैः ।
वामहस्ताङ्गुष्ठकेन शङ्कुमूलं निपीड्य च ॥६५॥

तन्त्रिकायां निवेश्यान्याश्चतस्र[10]-श्चाङ्गुली-[11]र्दृढम् ।
कोणं दक्षिणहस्तेन वादनार्थं यथा पुरा ॥६६॥

धृत्वा वादनतत्त्वज्ञो वादयेच्च[12] यथाविधि ।
पूर्वं[13] स्वरगताध्याये ये स्वराः पूर्वपक्षतः ॥६७॥

रावणीयमतज्ञेन कालसेनेन[14] दर्शिताः ।
[15]ते चत्वार-[16]श्चतसृभिरङ्गुलीभिः क्रमादिह ॥६८॥

ज्ञेया[17] रावणहस्ते[ऽ]त्र द्विगुणा रावणोक्तितः ।
रावणारिप्रसादाप्तपरसाम्राज्यसंपदा ॥६९॥

---

[1] D. E. तु [2] A. ० रब्धं
[3] D. E. कर्पर० [4–5] A. adds अनुस्वार [6] A. तीर्यग् D. तिर्यग्रंथ०
[7] A. ० निर्यात् [8] D. E. गवलोवा A. looks like गवलोच्छा
[9] A. adds अनुस्वार D. E. प्रवेश्य
[10] E. ० श्चतस्रा [11] A. E. omit रेफ
[12] D. वादयेत E. वादयेत् [13] A. omits अनुस्वार E. पूर्वंगत०
[14] D. E. कुंभकर्णेन भूभुजा (दर्शिताः being replaced by भूभुजा)
[15] A. तेन [16] A. ०चतसृ०
[17] D. E. ज्ञेय

अरातिरावणेनायमुक्तो रावणहस्तकः ॥७०॥

॥ इति रावणहस्तः[१] ॥

या वीणाः[२] पूर्वमुद्दिष्टा[3] मया लोकानुसारतः ।
तासां बन्धविशेषस्तु विज्ञेयो लोकतो बुधैः ॥७१॥

यतो लोकप्रमाणासु[४] तासु शास्त्रं प्रगल्भते ।
बृहद्देश्यामनुक्तत्वात् पूर्वाचार्यानुदीरणात् ॥७२॥
व्यक्तीभवन्ति श्रुतयः स्वराश्चैव यथा यथा[५] ।
तथा तथा प्रकर्तव्यं ततं रक्तिप्रवर्धनम् ॥७३॥
तेषां कानिचिदुक्तानि ततवाद्यानि युक्तितः ।
[६]लोकशास्त्रानुसारेण [७]ततो[ऽ]न्य[ा]न्यानि कल्पयेत् ॥७४॥
नकुलीशप्रसादाप्तपर[८]-संगीतसंपदा ।
नकुलादिमतज्ञेन नकुलाद्युपवर्णितम् ॥७५॥

इति श्रीराजाधिराजश्रीकालसेन[९]-महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे ततोल्लासे नकुलादिपरीक्षणं [१०]द्वितीयं समाप्तम् ॥

---

[१] D. E. ०हस्तकः　[२] A. omits विसर्ग　[3] A. D. add विसर्ग
[४] D. ० स्तु E. ० णस्तु　[५] E. omits second यथा　[६] A. E. लोके
[७] A. D. तत　[८] A. adds अनुस्वार E. ० पदार०
[९] D. E. कुम्भकर्ण०　[१०] D. E. omit द्वितीयं

## मत्तकोकिलालक्षणं नाम तृतीयं परीक्षणम्

राजते यत्प्रसादेन सर्वदा स्वरमण्डलम् ।
तन्नमामि शिवं यस्मिन्[१] (स्मिस्) त्रिधा[ऽ]स्ति स्वरमण्डलम् ॥१॥

मत्ताकोकिलवीणा[२] या स्वरमण्डलसंज्ञिका ।
लोकशास्त्रानुसारेण लक्ष(क्ष्य)तेऽत्र समासतः ॥२॥

सार्धहस्तमितामत्र प्रथमां परिकल्पयेत् ।
एतस्याश्च तृतीयांशन्यूना दैर्घ्ये द्वितीयिका[3] ॥३॥

अथान्या[:] पट्टिकास्तित्र आयामे[ऽ][४]ष्टादशाङ्गुलाः ।
समाने दोषरहिताः कार्याः पञ्चाङ्गुलो[च्]छ्रयाः ॥४॥

तत्राद्या सार्धहस्ता [स्याद्] द्वितीया हस्तमात्रिका ।
दक्षिणोत्तरमूलाग्रा विन्यस्या चैतयोर्द्वयोः ॥५॥

[५]मूलद्वयविलग्ना[ऽ]थो मध्ये न्यस्या तु पट्टिका ।
दशाङ्गुलानि संत्यज्य [६]पूर्वापरमुखी तु सा ॥६॥

दीर्घा तुर्या पट्टिका स्यादन्तरा च लघीयसी ।
[७]तिर्यक् तथा पञ्चमी स्यादग्रलग्ना लघीयसी ॥७॥

[८]ईशानाग्न्याद्यग्रा या स्यादन्तरं[९] यदिह द्वयोः ।
तत्रान्या पट्टिका कार्या पूर्वपट्टिकया समा ॥८॥

उत्सेधपिण्डयोरेकां परे त्वीशानकोणगाम् ।
वदन्ति पट्टिकामस्याः पार्श्वे स्यात् पट्टिकान्तरम् ॥९॥

[१०]तदन्तरेऽङ्गुलद्वन्द्वात् [११]तिर्यगीशानकोणगाम् ।
[१२]एवं यन्त्रं यथाश्लक्ष्णं समं स्यात्(च्)श्लि(छ्लि)ष्टसन्धिकम्[१३] ॥१०॥

संयोज्यानि तथा काष्ठान्यस्य भागं दशाङ्गुलम् ।
चर्मणा मुद्रये[च्]छेषं यन्त्रमा[च्]छादये[द्]दृढम् ॥११॥

---

[१] A. तस्मिन्　[२] D. E. वीणाथ　[3] D. E. द्वितीयका
[४] A. ०ष्टदशां० E. ०ला　[५] D.E. omit मूल···ग्नाथो　[६] E. पूर्वं०
[७] A. तीर्यक् E. omits this line.　[८] A. ईशानाग्नायाग्रयो
[९] D. E. अन्तरं　[१०] E. तदन्तरेषुंल०
[११] A. तीर्त्तंगीशान० D. ०द्वन्द्वत्ति०　[१२] A. यवं　[१३] A. omits म्

श्लक्ष्णकाष्ठेन [१]यन्त्रस्य या तिर्यक् पट्टिका स्थिता ।
विश्युत्तारस्यां या चास्याः पट्टिका पार्श्वतो गता ॥१२॥

तस्यां[२] रन्ध्राणि कुर्वीत विद्वान् द्वाविंशतिं[3]-स्तथा ।
तत्र च स्यादधोरन्ध्रपङ्क्तिमध्यगतं तथा ॥१३॥

ऊर्ध्वपङ्क्तिस्थरन्ध्रं स्यादेकस्यामेव वा बुधः ।
कुर्याद् द्वाविंशति[४]-रन्ध्राण्येषु रन्ध्रेष्वनुक्रमात् ॥१४॥

हेमादिधातुजा[५][न्]वापि गजदन्तमयानथ[६] ।
विचित्रान् दारवान् वापि कुर्या[च्]छङ्कून् यदृच्छया ॥१५॥

द्वयोः पट्टिकयोर्युक्त्या क्वचिद्द्वे अपि पट्टिके ।
स्यातामीशानकोणान्ते तत्र दक्षिणतः[७] स्थिता ॥१६॥

पट्टिकाद्वयमूलस्पृक् पट्टिका या बहिः पुनः ।
अस्या भागेऽङ्गुलमितं[८] दण्डं कुर्याद् विचक्षणः ॥१७॥

विस्तारे च तथा[ऽऽ]यामे पट्टिकासम्मितं सुधीः ।
तस्मिन् दण्डे प्रकुर्वीत रन्ध्रद्वाविंशतिं क्रमात् ॥१८॥

सप्त षड्वा[९] पत्रिका[:] स्युरत्र यन्त्रानुसारतः ।
रन्ध्रमानं यवार्धं स्यात् तेषां प्रथम—[१०]सप्तके ॥१९॥

रन्ध्राणां कल्पयेद् धीमान् सार्धद्वियवमन्तरम् ।
द्वितीये त्रियवं सार्धं त्रियवं तु तृतीयके ॥२०॥

अथवा [ऽ]नुगुणं रागनिष्पत्तेरन्तरं[११] मतम् ।
समा श्लक्ष्णा घना नातिस्थूलसूक्ष्मा[१२] दृढा अपि ॥२१॥

पट्टसूत्रमयीस्तन्त्रीर्विद्वानेषु[13] प्रकल्पयेत् ।
तासां प्रान्तान्तरं धीमान् बध्नीया[च्]छङ्कुषु क्रमात् ॥२२॥

तत्र या उत्तराः सप्ततन्त्र्यस्ताराः स्मृतास्तु ताः ।
मध्यस्थानगता मध्या मन्द्रा[१४]-स्तासामधः स्थिताः ॥२३॥

---

[१] A. तन्त्रस्य [२] A. E. omit अनुस्वार
[3] A. ०तिस्तया D. E. ०तिं तथा [४] D. adds अनुस्वार
[५] D. E. add अनुस्वार [६] A. E. ०मया तथा (In E. there is no clear distinction between न and त) [७] A. D. omit विसर्ग
[८] E. भागे कुलमित [९] A. षट्का D. षट्वा [१०] A. संज्ञके ।
[११] E. omits तरं [१२] E. ०सूक्ष्मी [13] A. D. विधानेषु [१४] A. मन्द्र०



द्वाविंशतितमा या तु सर्वाध[:]स्थतया स्थिता ।
सा नादरन्ध्रपूर्त्यर्थं ख्याता[ऽ]नुरणनात्मिका ॥२४॥

वाद्यादिवादनं चास्यामेकतन्त्रीवदीरितम् ।
निर्दोषशाकजं वाथ श्रीपर्णीदारुसंभवम् ॥२५॥

कंश्चिदेतादृशं यन्त्रं काष्ठेनैकेन वर्ण्यते ।
अष्टादशाङ्गुलं दैर्घ्ये त्वायामे सार्धहस्तकम् ॥२६॥

सुन्दरं काष्ठमापाद्यमुत्सेधे चतुरङ्गुलम् ।
एतत् काष्ठं तथा तक्ष्यं यथा हीयेत दैर्घ्यतः ॥२७॥

तृतीयांशः[१], [२]परित्यज्य शक्रकोणान्तमेव वा ।
याम्योदग्दिगवस्थस्य काष्ठस्यैशानकोणतः ॥२८॥

द्वित्राङ्गुलमितोऽधस्ताद् यत्र[3] भागो[४] न वा भवेत् ।
दशाङ्गुलानि संत्यज्य दक्षिणादथ भागतः ॥२९॥

यथा स्यात् परितः पिण्डमानमर्धाङ्गुलोन्नतम्[५] ।
त्र्यङ्गुलां च समां विष्वग् विदधीत खनिं[६] तथा ॥३०॥

दशाङ्गुलमितो भागो यः परो दारुणोऽत्र च ।
खनिं कृत्वोपरि दृढं चर्मणा मुद्रयेदमुम् ॥३१॥

अङ्गुलोत्सेधपार्श्वं च विधायैतदधोमुखम् ।
कल्पयेदुक्तया रीत्या रागवाद्यादिवादनम् ॥३२॥

सार्धहस्तमितान्मानान्न[७] परं मानमिष्यते ।
अर्वाग् वार्धकरादेतन्मानं नो कल्पयेत् क्वचित् ॥३३॥

एतयोर्मानयोर्मध्ये यथेष्टं मानकल्पना ।
[८]प्रकृतित्वादिहान्यासां वीणानामेकतन्त्रिका ॥३४॥

तदङ्गसर्ववीणानां मुख्येयं मत्तकोकिला ।
अन्याः प्रत्यङ्गमेतस्यास्त्रिस्थानेषु यतः स्फुटम् ॥३५॥

यथास्वमस्यां भासन्ते स्वराः सप्तापि तद्विदाम् ।
षड्विधैः करणैरेतां चित्रयन्त्यः समेत्य ताः ॥३६॥

---

[१] A. यांशे [२] A. परं त्यज्य
[3] A. यंत्र [४] A. D. भागौ
[५] A. ०मर्धोऽङ्गुलोन्मितम् [६] E. खनीं
[७] E. omits ०न्न [८] cf. S. R. VI 113-43 for 34-71 above.

उपरञ्जकतामस्याः प्रयान्ति सकला अपि ।
अथ तत्करणं नाम षड्विधं लक्ष्यते मया ॥३७॥

[१]सोदाहरणकं, रूपं कृतप्रतिकृतं[२] तथा ।
प्रतिभेदस्ततो रूपशेषमोघस्तु[3] पञ्चमम् ॥३८॥

प्रतिशुष्केति षष्ठं[४] स्यात्, क्रमतो लक्षणं यथा ।
मुख्यवीणा–प्रयुक्तं यत् (द्) भङ्क्त्वा गुर्वादि वाद्यते ॥३९॥

[५]युगपद्यत्तदन्यासु तद्रूपं तद्विवागतम् ।
मत्तकोकिलवीणायां प्राग्यदा वाद्यते गुरुः ॥४०॥

लघुनी द्वे विपञ्च्यादौ तदा स्यातां यदा[६] लघुः ।
एकोऽस्यां[७] वाद्यतेऽन्यासु तदा[८] वाद्यं द्रुतद्वयम् ॥४१॥

॥ इति रूपम् ॥१॥

रूपं विधाय तदनु यत्र [९]त [ज्] ज्ञेन वाद्यते ।
प्रत्यङ्गं नकुलाद्याख्यं कृतप्रतिकृतं[१०] तु तत् ॥४२॥

॥ इति कृतप्रतिकृतम् ॥२॥

प्रतिभेदो विपर्यस्ता भवेद् रूपक्रियैव सा ।
यदा द्रुतद्वयं मुख्यवीणायां वाद्यते विदा ॥
विपञ्च्यादिषु वीणासु तदा लघुरिति स्फुटम्[१२] ॥४३॥

॥ इति प्रतिभेदः ॥३॥

यदा विदध्याद् वि[च्]छेदं विदार्या मुख्यवैणिकः ।
तदा[ऽ]न्यासां वादनं यद्रूपशेषं तदुच्यते ॥४४॥

॥ इति रूपशेषम् ॥४॥

मत्तकोकिलवीणायां विलम्बितलयं[१३] यदा ।
वाद्यते करचातुर्यात् तदैवातिद्रुतं लयम् ॥
वाद्यते [१४]चेद् विपञ्च्यादावोघः स्यात् करणं तदा ॥४५॥

॥ इत्योघः ॥५॥

---

[१] A. सोदाह रकं D.E. सोदाहरणसंरूपं
[२] A. ०कृते
[3] D.E. मोघश्च
[४] A. कष्टं
[५] A. पुन०
[६] D.E. यथा
[७] D.E. omit अनुस्वार
[८] D.E. तथा
[९] E. ततज्ञेन
[१०] A. adds another तं before तु
[११] E. omits ०स्ता
[१२] E. omits ०म्
[१३] D.E. द्वयं
[१४] A. चद्



एकयैव [१]यदा तन्त्र्या स्यान्मुख्यामुख्यवीणयोः ।
संवाद्यंशान्यतरयोः स्वरयो-[२]र्व्यञ्जनं सह ॥
तदा तत् करणं नाम प्रतिशुष्केति गीयते ॥४६॥

॥ इति प्रतिशुष्का ॥६॥

॥ इति षड्विधं करणम् ॥

[३]रक्तेरतिशयाधानाद् ये वीणावाद्यपोषकाः ।
इहामुत्रफलाः पुंसां प्रोच्यन्ते ते च धातवः ॥
धातवोऽत्र स्वरा एव स्युराघातविशेषजाः ॥४७॥

ते चतुर्धा निगदिता विस्तारः करणस्तथा ।
आविद्धो[४] व्यञ्जनश्चेति, चतुर्धा तेषु चादिमः ॥४८॥

विस्तारजश्च, संघातजोऽथ, स्यात् समवायजः ।
अनुबन्धश्चेति, चतुर्धा[ऽ]त्र संघातजो मतः ॥४९॥

द्विरुत्तरो द्विरधरोऽथाधराद्युत्तरान्तकः ।
उत्तराद्यधरान्तश्चेत्येवमन्वर्थसंज्ञकः ॥५०॥

द्विरुत्तरा[५]-धरान्तो द्विरधराद्युत्तरान्तकः ।
उत्तरादि द्विरधरो[ऽ]धरादि ह्युत्तरान्तकः ॥५१॥

मध्योत्तरद्विरधरो[ऽ]धरमध्यद्विरुत्तरः ।
त्रिरुत्तरस्त्रिरधरोऽष्टावेते समवायजाः ॥५२॥

एवं चतुर्दशविधो विस्तारः सानुबन्धकः ।
अथ पञ्चविधो धातुः करणः स यथोच्यते ॥५३॥

ह्रादोच्चयौ[६] नि(नी)रटितो रिभितश्चानु[७]-बन्धकः ।
[८]आविद्धोऽपि तथा धातुः पञ्चधा वक्ष्यते यथा ॥५४॥

क्षेपः प्लुतोऽतिपातः स्यादतिकीर्णोऽनुबन्धकः ।
अथ व्यञ्जनसंज्ञश्च धातुर्दशविधो [९]यथा ॥५५॥

बिन्दुः कलं तलं पुष्पं रेफो नु(नि)स्वनितं तथा ।
निष्कोटितमथोन्मृष्टमवमृष्टानुबन्धकौ ॥५६॥

---

[१] A. तदा
[२] A.E. omit रेफ
[3] A. रक्तेरिति०
[४] A. आविधो
[५] D. E. omit रा
[६] D.E. ०यो
[७] A.D. ०नुन्धकः
[८] A.E. आविघोऽपि
[९] D. E. [ऽ]थवा

चतुर्स्त्रिंशदिमे ज्ञेया धातवो मिलिता इति ।
विस्तीर्णनादभेदत्वाद् विस्तारस्येह धातुता ॥५७॥

[१]यत्र शैघ्र्यात् प्रहारस्य स्वरानेकीकृतानिव ।
कृत्वा वैचित्र्यतः क्वापि विश्रान्ति[२] रचयेत् स्वरे ॥५८॥

असौ विस्तारजो नाम धातुरित्यपरे जगुः ।
रत्नाकरकृता त्वस्यालंकारत्वमुदीरितम्[३] ॥५९॥

॥ इति विस्तारजो धातुः ॥१॥

[४]अत्र प्रकरणे ज्ञेयौ मन्द्रतारौ स्वरौ क्रमात् ।
उत्तराधरसंज्ञौ हि तयोर्निष्पादकाविह ॥६०॥

उत्तराधरधातौ स्तस्तत्स्वरूपं[५] निरूप्यते ।
[६]नामनिर्वचनेनैतौ निगदौ यद्यपि स्थितौ ॥६१॥

तथापि बालबोधार्थं कृतं लक्ष्म न दुष्यति ।
धातुर्द्विरुत्तारः स स्याद्यत्र मन्द्रो द्विरुच्यते ॥६२॥

॥ इति द्विरुत्तारः ॥१॥

स तु द्विरधरो यत्र द्विस्तारस्थानके हतिः ।

॥ इति द्विरधरः ॥२॥

अधराद्युत्तारे तारः पूर्वमते च मन्द्रकः ॥६३॥

॥ इत्यधराद्युत्तरान्तः ॥३॥

तद्वैपरीत्ये विज्ञेय उत्तराद्यधरान्तकः ।

॥ इत्युत्तराद्यधरान्तः[७] ॥४॥

द्विप्रहारभवे भेदा एते संघातजे मताः ॥६४॥

॥ इति संघातजे भेदचतुष्टयमुदीरितम् ॥२॥

अथाष्टौ द्विप्रहारोत्थान् ब्रूमहे समवायजान् ।
द्विरुत्तराधरान्ते[८] द्वौ मन्द्रौ तारस्ततो भवेत् ॥६५॥

॥इति द्विरुत्तराधरान्तः ॥१॥

तारस्वरं द्विराहत्य सकृन्मन्द्रः प्रहन्यते ।
यत्र धातु[र्]द्विरधराद्युत्तरान्तो भवेदसौ ॥६६॥

॥ इति द्विरधराद्युत्तरान्तः ॥२॥

---

[१] A. अत्र [२] A. E. ० न्त्यं [३] D. E. ०मुरीकृतम्
[४] This verse is missing in A. [५] A. स्वररूपम्
[६] E. नामभिर्वचनोमौ [७] D. E. ०न्तकः [८] E. ०धंततः



[१]अत्र प्रकरणे ज्ञेयौ मन्द्रतारौ स्वरक्रमात् ।
उत्तराधरसंज्ञौ हि तयोर्निः(निष्)पादकाविह ।
उत्तरादिद्विरधरो मन्द्रात्(द्) द्विस्तारवादने ॥६७॥

॥ इत्युत्तरादिद्विरधरः ॥३॥

सकृत्तारो द्विर्मन्द्रः स्यादधरादिद्विरुत्तारे ।

॥ इत्यधरादिद्विरुत्तारः ॥४॥

मध्यस्थाने सकृन्मन्द्रस्तारो द्विः स्यात्ततः स्वरः ॥६८॥

अथ मन्द्रः सकृद्यत्र तारयोर्मध्यगो भवेत् ।
मध्योत्तारद्विरधरः स धातुरिति केचन ॥६९॥

॥ इति मध्योत्तरद्विरधरः ॥५॥

मध्यस्थाने सकृत्तारस्ततो द्वौ मन्द्रगौ स्वरौ ।
अथ तारस्वरो मन्द्रद्वयमध्यगतो भवेत् ॥
यत्र [२]धातौ स विज्ञेयो[ऽ]धरमध्यद्विरुत्तारः ॥७०॥

॥ इत्यधरमध्यद्विरुत्तारः ॥६॥

मन्द्रस्वरे त्रिराघातात् (द्) धातुर्ज्ञेयस्त्रिरुत्तारः ।

॥ इति त्रिरुत्तरः ॥७॥

तारस्वरे त्रिराघाताद्धातुस्त्रिरधरो भवेत् ॥७१॥

॥ इति त्रिरधरः ॥८॥

[॥ इत्यष्टौ समवायजभेदाः ॥३॥]

समवायजभेदाः[३] स्युरित्यष्टौ राजसम्मताः ॥७२॥

*सजातीयविजातीयधातुभेदविमिश्रणात् ॥
धातुभेदो[४] निबन्धाख्यः [५]कृष्णभूपेन कीर्तितः ॥७३॥

॥ इति विस्तारानुबन्धधातुः ॥४॥ इति चतुर्दशविस्तारधातुभेदाः ॥१॥

†भूरिभिर्लघुजैर्घातैरल्पैर्गुरुमयैस्तया ।
धातोः[६] करणसंज्ञस्य क्रिया [७]कृष्णनृपोदिता ॥७४॥

तद्भेदोदाहृतिः सम्यगधुना [८]संप्रदर्श्यते ।
लघवोऽष्टौ गुरुश्चान्ते यत्र ह्रादः स उच्यते ॥७५॥

॥ इति ह्रादः ॥१॥

---

[१] D.E. omit the first two lines of this verse.
[२] A. घातौ E. धातो [३] A.E. omit विसर्ग * cf. S.R. VI 147
[४] D.E. ०भेदा० [५] D. E. कुम्भ०
† cf. S. R. VI 149–52 for 74-83 above.
[६] A.E. omit विसर्ग [७] D.E. कुम्भ० [८] D. E. ०दृश्यते

चत्वारो लघवः प्रान्ते गुरुरुच्चयसंज्ञकः[1]।

॥ इत्युच्चयः ॥२॥

गुर्वन्तैर्लघुभिः षड्भिर्धातुर्नीरटितो भवेत् ॥७६॥

॥ इति नीरटितः ॥३॥

धातौ रिभितसंज्ञे तु [2]लद्वयं गान्तगं भवेत्।

॥ इति रिभितः ॥४॥

अस्यानुबन्धो विज्ञेयो विस्तारस्यानुबन्धवत् ॥७७॥

॥ इति करणानुबन्धः ॥५॥

॥ इति पञ्चकरणधातुभेदाः ॥२॥

आविद्ध[:] स्याद् भूरिगुरुर्गुरुहीनोऽथवा भवेत्।
अस्य भेदान्[3] यथाशास्त्रं विवृणोमि समासतः ॥७८॥

लगुरुभ्यां भवेत् क्षेपो गलघुभ्यामितीतरे।
द्वाभ्यामथ लघुभ्यां स्यादयमित्यपरे जगुः ॥७९॥

॥ इति क्षेपः ॥१॥

प्लुतो [4]लगाभ्यां लघुना लगुरुर्वा भवेदयम्।
त्रिभिर्वा लघुभिः पूर्वे प्लुतमाहुर्विपश्चितः[5] ॥८०॥

॥इति प्लुतः ॥२॥

[6]द्विर्लगौ यत्र धातौ स्तः [7]सोऽतिपात इतीरितः।
चतुर्भिर्लघुभिः कैश्चिदतिपातः [8]प्रकीर्त्यते ॥८१॥

॥ इत्यतिपातः ॥३॥

लगौ यत्र चतुर्वारमन्ते चैव लघुस्तथा।
सोऽतिकीर्णो भवेद् धातुर्नवलघ्वात्मकोऽथवा ॥८२॥

॥ इत्यतिकीर्णः ॥४॥

अस्यानुबन्धो विज्ञेयः करणस्यानुबन्धवत् ॥८३॥

॥ इत्यनुबन्धः ॥५॥

॥ इति पञ्चाविद्धधातुभेदाः ॥३॥

*भिन्नाङ्गुलि[9]-प्रहारेण धातुर्व्यञ्जनसंज्ञकः।
तद्भेदानधुना ब्रूमस्तत्र बिन्दुर्भवेद् यथा ॥८४॥

---

[1] A. ०के [2] A. द्वलयं [3] A.E. भेदाद्
[4] A. गलाभ्यां [5] A. omits विसर्ग [6] E. लग्ने गौ
[7] D. E. सातिपात [8] A. प्रतीस्तते
* cf. S.R. VI 154-70 for 84-106 above.
[9] A.E. ०गुली० E. ०प्रधाहारेण



बिन्दावेकत्र तन्त्र्यां[1] स्यात् प्रहारः[2] पृथुनादवान् ॥८५॥

॥ इति बिन्दुः ॥१॥

तन्त्रिकाद्वितयं नानास्थानमेकस्वरं यदा।
हन्यते युगपद् द्वाभ्यामङ्गुष्ठाभ्यां कलं तदा ॥८६॥

॥ इति कलम् ॥२॥

तन्त्रीं[3] वामकराङ्गुष्ठपीडितां दक्षिणेन चेत्।
अङ्गुष्ठेन निहन्त्येतत्तलमाहुर्मनीषिणः ॥८७॥ ॥ इति तलम् ॥३॥

[4]निहन्येत यदा तन्त्रीरेककालं कनिष्ठया।
सहाङ्गुष्ठयुगेन स्याद् धातुः पुष्पाभिधस्तदा ॥८८॥

॥ इति [5]पुष्पम् ॥४॥

कराङ्गुलीभिः[6] सर्वाभिः क्रमादेकस्वरो यदा।
[7]प्रहारः क्रियते रेफ[8]— ॥ इति रेफः ॥५॥
[9]स्तथानुस्वनितं भवेत् ॥८९॥

तलं कृत्वा[ऽ]वरोहेणाघाते[10], ॥ इत्यनुस्वनितम् ॥६॥
—निष्कोटितं पुनः।
वामाङ्गुष्ठेन [11]तूर्ध्वाधो [12]घातो- ॥ इति निष्कोटितम् ॥७॥
ऽथोन्मृष्टमुच्यते ॥९०॥

घातोऽतिमधुरध्वानस्तर्जन्या- ॥ इत्युन्मृष्टम् ॥८॥
[ऽ]थावमृष्टकम्।
[13]हन्ति त्रिस्थानकं[14] तन्त्रीत्रयमेकस्वरं पृथक् ॥९१॥

कनिष्ठया दक्षिणया[ऽ]ङ्गुष्ठाभ्यामप्यधः सरन्।
वादकस्य करो यत्र ब्रूते भूनायकेश्वरः ॥९२॥

॥ इत्यवमृष्टम् ॥९॥

आविष्टस्यानुबन्धेन व्याख्यातोऽस्यानुबन्धकः।
[15]नन्वेषु कथमुक्तो[ऽ]यमनुबन्धः पृथक् पृथक् ॥९३॥

यतो लक्ष्मकृतो भेदो [16]भेदेऽस्मिन्नैव[17] दृश्यते।
यद्यप्यभिन्नलक्ष्मायमनुबन्धो न भिद्यते ॥९४॥

---

[1] E. omits अनुस्वार [2] A. omits विसर्ग [3] A.E. omit अनुस्वार
[4] A. निहन्ये D. निहन्यते E. हन्यते [5] D.E. पुष्पः
[6] D. ०लिभिः [7] E. omits this foot [8] D. रेफे
[9] D. तथा [10] A. ०थांते [11] E. धातू०
[12] A. ०ऽथान्ते [13] E. हृति [14] E. omits अनुस्वार
[15] E. omits नन्वेषु···बन्धः [16] A.E. भेदो० [17] E. ०स्मिन्निव

तथापि कारणं[1] भेदे विद्यते तत्र तच्छृणु ।
उक्तधातुभिधानां स्याद् यस्मिन् प्रचुरता स च ॥९५॥

तद्धातुभेद-वैशिष्ट्यादनुबन्धोऽपि भेदवान् ।
॥ इत्यनुबन्धः ॥१०॥

॥ इति दशव्यञ्जनाः ॥४॥

चतुस्त्रिंशदिमे प्रोक्ता धातवः प्रोक्तलक्षणाः ॥९६॥

सर्ववाद्येषु सर्वत्रोपयोगं प्राप्नुवन्ति ते ।
वृत्तीनां वक्ष्यमाणानामाश्रयत्वे यथायथम् ॥९७॥

यथास्थानं प्रयुक्तेषु वाद्यवर्गो विराजते ।
विस्तारधातौ जातिः स्यादुदात्ता करणे [2]घना ॥९८॥

रिभिता[ऽ]विद्धधातौ[3] स्याल्ललिता[4] व्यञ्जने स्थिता ।
गुणप्रधानभावेन प्रवृत्तिर्गीतवाद्ययोः[5] ॥९९॥

वृत्तिरित्युच्यते सा तु त्रिविधा लक्ष्मतो यथा ।
चित्राद्या तत्परा वृत्तिर्दक्षिणा च तृतीयिका[6] ॥१००॥

यत्र वाद्यं प्रधानं स्यात्(द्)गीतं च गुणतां व्रजेत् ।
तत्र चित्रा भवेद् वृत्तिरिति चित्रगिरां गिरः ॥१०१॥
॥ इति चित्रा ॥१॥

समभावेन वर्तेते [7]गीतवाद्ये यदा तदा ।
चित्तवृत्तिविदा सा तु वृत्तिर्वृत्तिरुदाहृता ॥१०२॥
॥ इति वृत्तिः ॥२॥

दक्षिणा वृत्तिरत्रेष्टा चित्रा लक्ष्मविपर्ययात् ।
॥ इति दक्षिणा ॥३॥

क्रमादेतासु वाञ्छन्ति लयानेके द्रुतादिकान् ॥१०३॥

यतिं[8] क्रमादिहेच्छन्ति समां[9] स्रोतोगतां तथा ।
गोपुच्छां च ततो गीतिं[10] क्रमादेतासु मन्वते ॥१०४॥

मागधी(धीं) संभाविताख्यां पृथुलां च तथा क्रमात् ।
[11]ओघं चानुगतं[12] तत्त्वं वाद्यान्येतानि च क्रमात् ॥१०५॥

[1] E. कारणे [2] A. नघा [3] A. विधृत्वा तौ, E. विद्धघातो [4] D. स्याल्लघुता, E. स्याल्लयुता
[5] A. omits विसर्ग [6] D. E. तृतीयका
[7] D.E. गीते [8] A.D. omit अनुस्वार [9] E. सप्तमां
[10] E. omits अनुस्वार [11] A. ऊघं, D.E. उघं [12] E. ०गतां



चित्रं च वार्तिकं तद्वद्दक्षिणं मार्गमित्यथ ।
अनागतं समं चैवातीताख्यं[1] च ग्रहं क्रमात् ॥१०६॥
॥ इति वृत्तित्रयम् ॥

[2]मत्तकोकिलवीणायामेतद् धात्वादिवादनम् ।
एकतन्त्र्यादिवीणासु यथायोगमवस्थितम् ॥१०७॥

यद्यपि स्यादेकतन्त्री वीणानां प्रकृतिः परा ।
तथाऽप्यत्रोपदिष्टत्वात्तात्रेदमपि[3] दिश्यते ॥१०८॥

यदेकतन्त्र्यां[4] निर्दिष्टं तद्धुवेन्नकुलादिषु ।
[5]वंशेष्वप्येतदि[च्]छन्ति वांशिका ये सुशिक्षिताः ॥१०९॥

[6]वाद्यं गीतानुगं यत् स्यात् [7]त्रिप्रकारं तदिष्यते ।
[8]ओघश्चानुगतं तत्त्वमिति तल्लक्षणं यथा ॥११०॥

वैचित्र्याद् यत्र वाद्यस्य गीतानुगमने सति ।
भागशः समुदायानुकारित्वमुपदृश्यते ॥१११॥

निरन्तरं पाणिघातैस्तदोघ(दौघ) इति वर्ण्यते ॥११२॥
॥ इत्योघः ॥१॥

विलम्बितलये[9] गीते सति द्रुतलयान्वितम् ।
स्याद् वादनं [10]यथा गीतिविश्रामादन्यतो गतिः ॥११३॥

[11]क्वचिद् गीतानुगमने सति वाद्यस्य लक्ष्यते ।
तद्गीतानुगवाद्येषु भवेदनुगतं त्विदम् ॥११४॥
॥ इत्यनुगतम् ॥२॥

तद्वाद्यं तत्त्वमित्युक्तं [12]यद्व्यनक्तीह गीतगम् ।
विराममक्षरं गीतिं[13] वर्णान् जात्यंशकादिकम् ॥
तालं लयं यतिं चैव [14]गीतेनैक्यमिवागतम् ॥११५॥
॥ इति तत्त्वम् ॥३॥

॥ इति गीतानुगं वाद्यम् ॥

[1] A. ०गीताख्यं [2] cf. S.R.VI 176-78 for 107-09 above.
[3] E. ०मय(प?)दिश्यते [4] E. omits अनुस्वार [5] E. वंशेष्ट०
[6] cf. S. R. VI 171—75 for 110—15 above. [7] E. त्रिः
[8] A. ऊँघ० D. उघ० E. नुंघ० [9] A. D. ०लयो [10] E. तथा
[11] D. E. किंचिद् [12] A. यद्यनक्तीह, D. तद्व्यनक्तीह,
[13] A. omits अनुस्वार [14] A. ०नैक्यमवागतम् D.E. ०नैकमिवागतम्

[1]यद् वाद्यं शुष्कमित्युक्तं तद्गोष्ठीत्यभिसंज्ञितम्[2] ।
सा द्विधा[ऽऽ]द्या दृढा चित्रा परा, तत्रादिमा भवेत् ॥११६॥

[3]ग्रहैश्च त्रिविधैर्मार्गतालैश्च त्रिविधैरपि ।
पाटैश्च पटहोद्भूतैः प्रवृत्ता युगपद्गता[4] ॥
सैव रम्यतरी प्रोक्ता[5] [6]ब्रह्मशैलावनीभृता ॥११७॥

[7]चित्रा पाटैर्मृदङ्गोत्थैः प्रवृत्ता चोपरञ्जिता ।
[8]षीणाकोणाङ्गुलीघातैरन्तरङ्गैश्च[9] कोमलैः ॥११८॥

[10]तस्याश्चाश्र[ा]वणाद्या[:] स्युर्दशभेदाश्च तान् वयम् ।
लक्ष(क्ष्य)लक्षणसंयुक्तान् व्याकुर्मः पूर्वशास्त्रतः ॥११९॥

अत्रेममितिहासं च दर्शयन्ति पुरातनाः ।
पुरा सुमेरुशिखरे नानारत्नविभूषिते[11] ॥१२०॥

चित्रद्रुमवनाकीर्णे[12] रम्यहर्म्योपशोभिते ।
ऋषयः सिद्धगन्धर्वाः किन्नराप्सरसां गणाः ॥१२१॥

चतुर्मुखस्य पुरतो दिव्यं तौर्यत्रिकं पुरा ।
चक्रुः समेताः परमं नानारसपुरस्कृतम् ॥१२२॥

तद् दृष्ट्वा[13] दानवाः सर्वे ननन्दुः सहराक्षसाः ।
परस्परं विचार्येदमब्रुवन्[14] सहसोत्थिताः ॥१२३॥

एतद् दृष्ट्वा वयं सर्वे संप्राप्ताः परमां मुदम् ।
प्रहीष्यामो वयमिदं [15]निर्गीतं नो मुदावहम् ॥१२४॥

एतस्मिन्नन्तरे देवा[16] हृष्टान् दृष्ट्वा [ऽ]सुरांस्तदा ।
नारदं सहिताः सर्वे विनिश्चित्येदमब्रुवन् ॥१२५॥

महर्षे राक्षसाः सर्वे वाद्येनानेन तोषिताः ।
[17]निर्गीतेन ततो सूर्यं (ततस्तूर्यं) बहि(हि)रस्माद् विधीयताम् ॥१२६॥

ततस्तेषां वचः श्रुत्वा नारदो भगवान् मुनिः ।
तानुवाच न वो वाक्यं व्यर्थं भवितुमर्हति ॥१२७॥

---

[1] cf. S.R.VI.17 [2] D. E. ०संज्ञिकम्
[3] A. ग्रहश्च [4] A. D. पदगता
[5] D. E. प्रोक्तो [6] D. E. मेदपाटावनी०
[7] D. E. चित्र० [8] E. षीणा [9] A. रंगरंगैश्च
[10] D. E. तस्यास्त्वा० [11] D. विभूते E. ०विभूयते [12] E. कीर्णैः
[13] E. तद् दृर्ष्ट्व [14] A. D. ०मब्रवन् [15] E. निगीतं
[16] E. देवो [17] E. निगीतेन सुर्यु बहिरस्माद्धितीयताम्



इदं बहिर्वाद्यमिति प्रथां लोके गमिष्यति ।
ततः प्रभृति लोकेऽस्मिन् बहिर्वाद्यमिति प्रथाम् ॥१२८॥

निर्गीतकमिदं वाद्यमगमन्नारदोक्तितः ।
उपोहनान्वितं धातुवाद्यजातपरिस्कृ(ष्कृ)तम् ॥१२९॥

रक्षसामसुराणां च परमानन्ददायकम् ।
भवतामपि संतुष्टिं[1] निर्जरा(रां)[2] जनयिष्यति ॥१३०॥

[3]योजयिष्यति चेष्टार्थैः प्रयोक्तारं जगत्त्रये ।
तस्मात् पूर्वमिदं योज्यं रङ्गविघ्नोपशान्तये ॥१३१॥

[4]आश्रावणादिरूपेण वैणं निर्गीतकं हि तत् ।
दशप्रकारं तल्लक्ष्म क्रियते [5]कृष्णभूभुजा ॥१३२॥

आश्रावणारम्भविधी वक्त्रपाणिस्तृतीयकः ।
संखोटना चतुर्थी च पञ्चमी परिघट्टना ॥१३३॥

मार्गासारितकं षष्ठं लीलाकृतमतः परम् ।
आसारितत्रयं चेति शुष्कवाद्यानि वै [6]दश ॥१३४॥

विस्तारधातुभेदानामाद्यो भेदो द्विरुच्यते ।
द्वितीयश्च तथा भेदः [7]प्रयोज्योऽस्य [8]द्विरादिमः ॥१३५॥

द्वितीये [9]च तथा लीलाकृतमुच्चार्य वै द्विशः ।
युग्मान्तराण्यपि तथा प्राग्वद्युग्मोत्तरादिकम् ॥१३६॥

प्रयुज्यते तदा शुष्कवाद्यमाश्रावणा[10] भवेत् ।
इत्याचार्यमते ब्रूते विशेषं तु विशाखिलः ॥१३७॥

विस्तारधातुभेदानां प्रयुज्यन् द्रुतरूपताम् ।
अथ ध्रुवाः(वा)[ऽऽ]श्रावणायाः [11]प्रोच्यते पृथिवीभृता ॥१३८॥

तत्र[12] स्युः प्रथमे खण्डे प्रथमौ[13] द्वौ गुरू[14] ततः ।
एकादशस्तथा वर्णो गुरुः[15] कार्यश्चतुर्दशः ॥१३९॥

वर्णः पञ्चदशस्तद्वच्चतुर्विशो गुरुर्भवेत् ।
अष्टादशान्ये लघव[16] एवमेव द्वितीयके ॥१४०॥

---

[1] A. omits अनुस्वार [2] E. ०निर्जुराय [3] E. omits योजयिष्यति
[4] cf. S. R.VI 178—240 for 132—203 above.
[5] D.E. कुम्भ० [6] E. omits द [7] E. प्रयोज्यश्च
[8] E. omits द्वि [9] E. omits च [10] E. माश्रवणा
[11] E. प्रोच्यन्ते [12] A. तत [13] A. D. प्रथमो
[14] A. E. गुरु D. गुरुं [15] A. omits विसर्ग [16] D. E. add विसर्ग

खण्डे खण्डे तृतीये तु तृतीयश्चाष्टमस्तथा ।
गुरुः पञ्चदशो वर्णो लघवो द्वादशेतरे[1] ॥१४१॥

एवं खण्डैस्त्रिभिर्गेया[2] ध्रुवेयं सिद्धिमीप्सुभिः ।
भरताचार्यसंमतया ब्रूमः पातकलाविधिम् ॥१४२॥

द्वाविंशतिमथाष्टाविंशतिं[3] द्वात्रिंशतिं[4] तथा ।
विकल्प्य विदुषः केचित् केचिदस्यां कला जगुः ॥१४३॥

अनागतग्रहे शम्यात्रयं तालत्रयं ततः ।
ततः शम्याद्वयं [5]तालद्वयं तत्र समे ग्रहे ॥१४४॥

अतीते तु द्वादश स्युः शम्यातालाश्च संगताः ।
षडुत्तरे[6] स्युः कलिके चतस्रो युग्मसंज्ञके ॥१४५॥

द्वाविंशतिकलापक्षे विधिरेष मयोदितः ।
अथाष्टाविंशतिविधौ प्रब्रूमोऽत्र कलाविधिम्[7] ॥१४६॥

[8]पूर्वोक्तातीतवच्चात्र कला द्वादश कीर्तिताः ।
द्विकलोत्तारवच्चात्र कला द्वादश तु स्मृताः ॥१४७॥

शेषाश्चतस्रः[9] कलिकयुग्मवच्चात्र संमताः ।
॥ इत्यष्टाविंशतिकला[10] ध्रुवाः ॥
द्वात्रिंशत्कलिकापक्षे चतुर्विंशतिरेव ताः १४८॥

द्वितीयपक्षवत् कार्याः कलाः प्रथमत[:]स्थिताः ।
अष्टावशिष्टास्तदनु ज्ञेया द्विकलयुग्मवत्[11] ॥१४९॥
॥ इति द्वात्रिंशत्कला ध्रुवाः ॥

अत्रातीतग्रहः पक्षत्रयेऽप्युत्तरयुग्मतः ।
अस्यां गानोपयोगाय विदारीरथ कीर्तये[12] ॥१५०॥

पूर्वा शम्यात्रयेण स्यात् परा तालत्रयेण तु ।
शद्वयात्ताद्वयादन्ये तृतीया तु तुरीयिका ॥१५१॥

[13]शताभ्यां पञ्चमी ज्ञेया षष्ठी स्यात् पञ्चपाणिना ।
सप्तमी युग्मतालेन केचिदेताः[14] पुनर्जगुः ॥१५२॥

[1] A. D. द्वादशे रते E. द्वादशेतरेण [2] E. ०र्गेयो
[3] D.E. ०मप्याष्टाविंशति [4] A. ०द्वात्रिंशतं [5] E. तत्र लद्वयं
[6] A.D. षडुत्तर [7] A. कलाविधम् D. कालावधिम् E. कलाविधिः
[8] E. पूर्वोक्ताभीत० [9] E. शेष्यश्च
[10] D. ०काला० [11] A. ०यग्मकम्
[12] D. E. कीत्रये [13] A.D. शाताभ्यां [14] A. ०दता



तिस्रो यथाक्षराद्युग्मा[द्]द्विरावृत्या[1] विदारिके ।
आद्याद्वितीये च तयोरन्ते [2]विद्यात् कलाद्वयम् ॥१५३॥

एवमष्टादशकला विदारीद्वितयेन[3] तु ।
[4]चञ्चत्पुटाद् यथा वर्णात् तृतीया स्याद्विदारिका ॥१५४॥

[5]अन्यथा पुनरन्ये तु विदारीः प्रतिजानते ।
आद्याद्वितीये विज्ञेये युग्मेन द्विकलेन तु ॥
यथाक्षरे पञ्चपाणौ तृतीया तन्मते मता ॥१५५॥

अपरे त्वन्यथा प्राहुर्विदारीः[6] पूर्वसूरयः ।
[7]आद्या विदारी प्रागुक्तकलाद्वादशभिः स्मृता ॥१५६॥

द्वितीया [8]तु यथावर्णोत्तारेण प्रतिपादिता ।
शेषा यथाक्षराद्युग्मादेवमाश्रावणा भवेत् ॥१५७॥

सत्स्वप्येतेषु पक्षेषु पूर्वाचार्यप्रपञ्चनात् ।
प्रमाणीकुरुते पूर्वं[9] पक्षं पक्षीन्द्रविक्रमः ॥१५८॥
॥ इत्याश्रावणा ॥१॥

भेदा विस्तारधातूत्था[:][10]स्वरारोहावरोहिणः ।
क्रमात्तलेन[11] रिभितह्लादाभ्यां मिश्रतास्ततः[12] ॥१५९॥

[13]भेदं करणधातूत्थं द्वि[स्]त्रिर्वा[ऽ]भ्यस्य लीनवत् ।
ततस्तु बहुशो[ऽ]भ्यस्ते भेदे विस्तारधातुजे ॥१६०॥

करणस्य परा भेदा द्विरभ्यस्या पुनस्तथा ।
आरम्भविधिरेवं[14] स्यादथैतस्य ध्रुवा यथा ॥१६१॥

वसवो गुरवो लाश्च द्वादशान्ते च पञ्चगाः ।
एवमाद्यं भवेत् खण्डं पञ्चविंशतिवर्णकम् ॥१६२॥

ततो द्वितीये[15] खण्डे तु वसवो लघवो गुरुः ।
चत्वारो लघवो गश्च लाश्चत्वारो गुरुस्तथा ॥१६३॥

एवमेकोनविंशत्या वर्णैर्जति[16] ततः परम् ।
खण्डं तृतीयं[17] लघुभिरष्टभिर्गुरुणा भवेत् ॥१६४॥

[1] E. ०कृत्या [2] D. E. विद्यात् [3] A. द्वितीयेन
[4] E. चञ्चत्पुटाद् [5] E. अथान्य [6] E. ०विदारिः
[7] E. अद्या [8] E. द्वितीयादि [9] D.E. omit अनुस्वार
[10] D.E. स्युरारोहा० [11] A. ०त्तालेन [12] A. ०स्तुतः
[13] A. तेंत [14] E. omits अनुस्वार [15] A. द्वितीयखण्डे
[16] A. ०र्जाता [17] D.E. omit अनुस्वार

इत्यारम्भविधिरेषा ध्रुवा तत्र यतिर्यथा ।
पूर्वखण्डे बुधैः कार्या सैकविंशे गुरौ पुनः ॥१६५॥

द्वितीयखण्डे विश्राम्ये गुरौ वर्णे चतुर्दशे ।
एवमाद्यं दलं तस्य कलाद्वादशभिः स्मृतम् ॥१६६॥

षड्भिः कलाभिरन्यत्तु[1] द्वितीयं परिकीर्तितम् ।
चतुः(तुष्)कलं तृतीयं स्यादस्य पातविधिर्यथा ॥१६७॥

तालास्त्रयस्तथैकात्र शम्या तौ द्वौ शयोर्द्वयम् ।
तालौ द्वौ सन्निपातौ द्वावित्याद्ये स्युर्दले कलाः ॥१६८॥

क्रमाद्दले द्वितीये च तृतीये च पुनर्यथा ।
यथाक्षरस्योत्तारस्य [2]क्रमाच्चञ्चत्पुटस्य च ॥१६९॥

इत्यारम्भविधिः सम्यगारम्भेण विनिर्मितः ॥१७०॥

॥ इत्यारम्भविधिः ॥२॥

वक्त्रपाणिमथ ब्रूते चक्रपाणिपदानुगः ।
कर्णा(करणा)विद्धयोर्यत्र बाहुल्यं व्यञ्जनाल्पता ॥
स [3]वक्त्रपाणिर्विज्ञेयो विस्तारेण विवर्जितः ॥१७१॥

मुखं प्रतिमुखं चात्र [4]तालाङ्गं सूरयो जगुः ।
प्रवृत्तैककयोरत्र वर्णाङ्गत्वं प्रयोजयेत् ॥१७२॥

ध्रुवायामस्य गुरवः पञ्च षट्(ड्)लघवः पुनः ।
[5]गषट्कं लद्वयं वेदा गुरवस्तत्समाश्च लाः ॥१७३॥

त्रयो गा लघवोऽष्टान्ते वक्त्रपाणौ गुरुर्भवेत् ।
या मात्रा [6]मद्रके प्रोक्ता द्विकले [7]वस्तुनो[ऽ]न्तगा ॥१७४॥

तस्यास्तालोऽत्र विज्ञेयो मुखमष्टकलासु च ।
षट्पितापुत्रकेणाथ चतुरावृत्तियोगिना ॥१७५॥

अस्य प्रतिमुखं कार्यमपरे त्वन्यथा जगुः ।
एतत्कार्यं त्रिरावृत्तपूर्वोदितकलाष्टकात् ॥
[8]मात्रया तु विदारी स्याद् वक्त्रपाणौ मुनेर्मतात् ॥१७६॥

॥ इति वक्त्रपाणिः ॥३॥

अथ संखोटनां ब्रूमो भरताचार्यसंमतात् ।
अङ्गुष्ठाभ्यां च तर्जन्या यत्र निष्पीड्य तन्त्रिकाम्[9] ॥
बिन्दुधातौ वाद्यमाने वादिसंवादिनां मिथः ॥१७७॥

[1] A. ०रन्यस्तु [2] E. ०ञ्चञ्चत्पुट० [3] E. चक्रपाणि
[4] E. लांगं [5] A. गुरुषड् लद्वयं [6] A. मंद्रके
[7] D. वस्तुनोंतका [8] D. मावया E. मंवया [9] E. ०कम्



[1]स्वराणां बहुधा सङ्गः प्रयोगश्चानुवादिनाम् ।
विवादिनामल्पता च विस्तारस्य भिदामपि ॥१७८॥

धात्वन्तरैर्मिश्रितानामभ्यासो द्विस्त्रिरूह्यते ।
केवलांस्तांस्ततो द्विश्च प्रयुज्यासु, परानपि ॥१७९॥

विलीनानिव धातूंस्तान् प्रयुञ्जीत पुरोदितान् ।
प्रोक्ता संखोटना[ऽ]थास्या[2] ध्रुवा [3]सम्यक्(ङ्)निरूप्यते॥१८०॥

गद्वयं लाष्टकं च द्वौ गुरू पश्चाल्लघुर्गुरुः ।
लघवो द्वादशान्ते गः सोक्ता संखोटना ध्रुवा ॥१८१॥

यथाक्षरो द्विसंख्यातः कलास्वत्रोत्तरो मतः ।
अत्र तु [4]स्वेच्छया प्रोक्ता विदार्यो भरतादिभिः ॥१८२॥

॥ इति संखोटना ॥४॥

भेदैः[5] करणधातूत्थैर्मिश्रा व्यञ्जनधातुजाः[6] ।
विचित्रललितस्निग्धाः पाणिलाघवशालिनः[7] ॥१८३॥

आरोहिणो यत्र भेदास्तामाहुः परिघट्टनाम् ।
यत्र स्युर्वसुसंख्याका गुरवो [8]लघवो[ऽ]जिनाः ॥१८४॥

गौ द्वौ [9]षोडशलाश्चान्ते गुरुर्यत्र ध्रुवा[ऽ]त्र सा ।
[10]संपक्वेष्टाकवद्यद्वा स्युः [11]संपिष्टकवत् कलाः ॥१८५॥

दश द्वादश वेत्युक्ताः पुरा संपिष्टके कलाः ।
[12]द्वादशैवात्र तु ग्राह्याः पूर्वाचार्योक्तगौरवात्[13] ॥१८६॥

केचित् पक्षद्वयोक्तानां कलानां योगमूचिरे ।
[14]संपक्वेष्टाकतालं तु केचित्तु द्विकलीकृतम् ॥
संपक्वेष्टाकमपरे कलिकद्विकलं[15] जगुः ॥१८७॥

॥ इति परिघट्टना ॥५॥

विस्ताराविद्धकरणभेदानां मिश्रणान्मियः ।
कलस्य च [16]तलस्यापि मार्गासारितमीरितम् ॥१८८॥

[1] A. स्वरणायाँ [2] A. संखोटनाया स्याद् D. E. संखोटनाथा स्याद्
[3] E. omits सम्यक्……and the next verse.
[4] E. omits स्वेच्छया [5] E. भेदो [6] A. ०ज्ञाः
[7] E. ०शीलिनः [8] D.E. लघूनो [9] A. षोडशकला०
[10] A. संपक्वेष्टकेवद्यद्वत् D. संपत्केष्टाकवद्यद्वा E. संपक्वेष्टकेवद्यद्वा
[11] E. परिष्टकवत् [12] E. द्वादशे० [13] E. ०चार्योक्ता०
[14] D. संपत्केष्टाक [15] A. ०द्विकालं [16] E. तस्यापि

केचित्तु करणं धातुं कलेन च तलेन च ।
[१]मिश्रलक्षणमाचक्षुर्मार्गासारितके बुधाः ॥१८९॥

चत्वारो गुरवोऽष्टौ ला द्वौ गुरू[२] वसवश्च लाः ।
गुरुश्चेति पृथक् खण्डत्रये लक्षणमीदृशम् ॥१९०॥

चञ्चत्पुटोऽत्राद्यखण्डे[3] पञ्चपाणिस्तु शेषयोः ।
कनिष्ठासारितोक्तोऽत्र विधिस्तालकलासु च ॥१९१॥

॥ इति मार्गासारितम् ॥६॥

लयान्तरं परिसृतं तथाभिसृतमित्यपि ।
प्रयुज्यते यदि परं वाद्यतालकलाविधौ ॥१९२॥

माधुर्यं सौकुमार्यं च यदि तत्राभिजायते ।
तदा लीलाकृतं ब्रूते नृपो लीलाभृतां वरः ॥१९३॥

वार्तिके पथि [४]यद् गीतं [५]षड्जग्रामस्थजातिजे ।
रागेंऽशेऽभिसृतं तत्तु बुधैरासारितं स्मृतम् ॥१९४॥

[६]एवमेव परिसृतं मध्यमग्रामसंस्थिते ।
जातिरागांशके गीतमपरे त्वन्यथा जगुः ॥१९५॥

माषघातादिसप्ताङ्गमपरान्तकमत्र [७]यत् ।
गीयतेऽभिसृतं तत्तु तथा[८] परिसृतं स्मृतम् ॥१९६॥

[९]प्रवृत्तादिनवाङ्गैस्तु संयुक्तमपरान्तकम् ।
लयान्तरं[१०] मया प्रोक्तं [११]प्रबन्धोल्लास एव हि ॥१९७॥

एवं लीलाकृतं त्रेधा गीतकत्रययोगतः[१२] ।
तस्य प्रयोगो द्विविधः कथितः पूर्वसूरिभिः ॥१९८॥

सार्थकैरर्थहीनैश्च [१३]पदैरेव निबध्यते ।
मानतालयुतं वाद्यमेतत् प्राह विशाखिलः ॥१९९॥

[१] D.E. मिश्रं [२] A. E. गुरु [3] A. ०त्रायखण्डे E. शत्राद्यखण्डे
[४] E. वद् [५] E. ०ग्रामस्था०
[६] D. repeats this line, E. also contains a confused repetetion reading as—एवमेव परिसृतं मध्यजातिदो रागेंशेति स्मृतं तन्न। बुधैरासारितं स्मृतै (?) ।
[७] A. येत् [८] A. यथा [९] A. प्रावृत्तादि०
[१०] A. omits अनुस्वार [११] A. प्रबोधो; vide S. Raj. Vol. I.p. 537,38
[१२] E. गीतकत्रयोगतः [१३] A. पादै०



केचित्तु वियुतं ताभ्यां मानहीनमितीतरे ।
इच्छया तालयुग्मं स्याद् ध्रुवायामिति तद्विदः ॥२००॥

॥ इति लीलाकृतम् ॥७॥

[१]यथाक्षरे द्विसंख्याते त्रिसंख्याते यथाक्रमात् ।
आसारिते पूर्वमुक्ते प्रबन्धोल्लासके[२] त्रिधा ॥२०१॥

वर्णालंकारशोभाढ्ये[3] युक्ते वृत्तित्रयेण च ।
वाद्यैश्च तत्त्वप्रमुखैर्धातुना करणेन च ॥२०२॥

आवृत्तिः क्रियते तस्मिन् प्रत्येकं [४]च त्रिधा तदा ।
आसारितत्रयं नाम निर्गीतं जायते स्फुटम् ॥२०३॥

॥ इत्यासारितत्रयम्[५] ॥८-१०॥

सुशारीरस्य शिक्षार्थं यमीशं मत्ताकोकिला ।
[६]सेवते तेन भूभर्त्रा[७] कथिता मत्तकोकिला ॥२०४॥

इति श्रीराजाधिराज[८]-कालसेनमहीमहेन्द्रविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां [९]वाद्यरत्नकोशे ततोल्लासे [१०]मत्ताकोकिलालक्षणं [११]नाम तृतीयं परीक्षणं समाप्तम् ॥

[१] D. E. यत्राक्षरे [२] A. ०कं [3] E. ०ढ्यो [४] D. E. चेत्
[५] The details of the technique of 'Vīṇāvādana' given in this 'Parīkṣaṇa' have been tabulated in an Appendix appearing on the next page. This will be useful for ready reference.
[६] E. omits this line [७] A. E. ०भर्ता [८] D. E. श्रीकुम्भकर्ण०
[९] A. रत्नवाद्य० [१०] D. omits मत्त [११] E. omits नाम

# APPENDIX

*Tabular Presentation of the Detailed Treatment of the Technique of 'Vīṇāvādana'.*

## 1. *The six Varieties of 'Karaṇa'.*

करणम्

- १. रूपम्
- २. कृतप्रतिकृतम्
- ३. प्रतिभेदः
- ४. रूपशेषम्
- ५. ओघः
- ६. प्रतिशुष्का

## 2. *The 34 varieties of 'Dhātu'.*

धातु :

- विस्तार०
  - विस्तारज०
  - संघातज०
    - १. द्विरुत्तरः
    - २. द्विरधरः
    - ३. अधराद्युत्तरान्तः
    - ४. उत्तराद्यधरान्तः
  - समवायज०
    - १. त्रिरुत्तर :
    - २. त्रिरधर :
    - ३. द्विरुत्तराधरान्त :
    - ४. द्विरधरोत्तरान्त :
    - ५. उत्तरादिद्विरधर :
    - ६. अधरादिद्विरुत्तरः
    - ७. मध्योत्तरद्विरधरः
    - ८. अधरमध्यद्विरुत्तरः
  - अनुबन्ध०
- करण०
  - १. रिभित :
  - २. उच्चय :
  - ३. नीरटित :
  - ४. ह्राव :
  - ५. अनुबन्ध :
- आविद्ध०
  - १. क्षेप :
  - २. प्लुत :
  - ३. अतिपात :
  - ४. अतिकीर्ण :
  - ५. अनुबन्ध :
- व्यञ्जन०
  - १. पुष्पम्
  - २. कलम्
  - ३. तलम्
  - ४. बिन्दु :
  - ५. रेफ :
  - ६. अनुस्वनितम्
  - ७. निष्कोटितम्
  - ८. उन्मृष्टम्
  - ९. अवमृष्टम्
  - १०. अनुबन्ध :

१ + ४ + ८ + १ = १४ + ५ + ५ + १० = ३४

## 3. *The three types of 'Vṛtti.'*

वृत्ति :

- १. चित्रा
- २. वृत्ति :
- ३. दक्षिणा

## 4. *The three varieties of 'Gītānuga Vādya'*

गीतानुगवाद्यम्

- १. ओघ :
- २. अनुगतम्
- ३. तत्त्वम्

## 5. *The ten varieties of 'Śuṣka-Vādya'*

शुष्कवाद्यम्

- १. आश्रावणा
- २. आरम्भविधिः
- ३. वक्त्रपाणिः
- ४. संखोटना
- ५. परिघट्टना
- ६. मार्गासारितम्
- ७. लीलाकृतम्
- ८-१०. आसारितत्रयम् (कनिष्ठ-मध्यम-ज्येष्ठासारितम्)

## किन्नरीलक्षणं नाम चतुर्थं परीक्षणम्

किन्नरीकलितपाणिपल्लवा किन्नरी सततांककरी सती ।
सेवते प्रतिदिनं महेश्वरं तन्नमामि वचनाङ्गमानसैः ॥१॥

केचिन्निबन्धकर्तारो निबन्धत्वदुराग्रहात् ।
किन्नरीलक्षणं चक्रुर्वीणाप्रकरणागतम् ॥२॥

तेषामकुशलानां च लोके[1] शास्त्रेऽपि तत्त्वतः ।
लक्ष्यमार्गविरुद्धत्वान्न तन्मन्यामहे वयम् ॥३॥

यतोऽत्र स्वरसंभूतिरुदाहारि यदृच्छया ।
अस्माभिरपि तल्लक्ष्मगतानुगतिकत्वतः ॥४॥

लिख्यते शास्त्रकाराणामनुसारेण तत्र च ।
सामञ्जस्यं यदस्त्येतद्विदांकुर्वन्तु तद्विदः ॥५॥

तत्र मार्गगता तावत् किन्नरी प्रतिपाद्यते ।
[2]लघ्वी च बृहती चेति द्विधा चात्र लघीयसी[3] ॥६॥

लक्ष्यते [4]सर्वतस्तस्या दण्डमानमिहोच्यते ।
दैर्घ्ये दण्डो भवेदत्रैकचत्वारिंशदङ्गुलः ॥७॥

वैणवः परिणाहोऽस्य भवेत् पञ्चाङ्गुलैर्मितः ।
[5]दण्डदैर्घ्यमितं रन्ध्रं गर्भेऽस्य ककुभस्तथा ॥८॥

शाकदारुभवः सार्धद्व्यङ्गुलो विस्तरे स च ।
दैर्घ्ये [6]पञ्चाङ्गुलस्तस्माद्दैर्घ्यविस्तारयोर्भवेत् ॥९॥

[7]न्यूनोऽर्धाङ्गुलमानेन, पत्रिका ककुभस्थिता ।
मध्ये [8]कूर्मोन्नता लौही तथा [9]स्युर्नलिका अपि ॥१०॥

कांस्यजा लोहजा वाथ गृध्रवक्षोऽस्थिजा[10] अथ ।
चतुर्दशस्वरस्थाने सारिकाः स्युश्चतुर्दश ॥११॥

---

[1] A. E. लो(E. ले)कशास्त्रेऽपि
[2] A. and E. look like लघ्वी and लस्वी respectively, D. लघ्वीति
[3] cf. S. R.VI 257–87 for 6–45 above.
[4] A. looks like पूर्वत०
[5] A. दण्डदैर्घ्ये मतं E. दण्डं दैर्घ्यमितं
[6] D. E. पञ्चाङ्गल्या०
[7] D. E. स्थूलो०
[8] A. कुर्मो०
[9] A. स्युर्मलिका
[10] A. ० जाथवा



श्लक्ष्णवस्त्रमषीमिश्रमद(र्द)नेन विनिर्मिताः ।
स्थापनीया दण्डपृष्ठे तासां स्यात्[1] स्थापने विधिः ॥१२॥

सप्तकद्वितयं न्यस्यं द्वितीयस्य च तस्य तु ।
अधो निषाददेशे स्यात् प्रथमा सारिका ततः ॥१३॥

अङ्गुलादूर्ध्वदेशेऽन्यास्ततः[2] स्थाप्याः परा अपि ।
पूर्वाधिकेऽन्तरे किंचित् किंचित्(द्)द्व्यङ्गुलतः परा ॥१४॥

स्थापनीया[ऽ]ध्यष्टमी तु पूर्वस्यास्त्र्यङ्गुलान्तरे ।
स्थापयित्वा पराः षट् च पूर्वपूर्वाधिकान्तरे ॥१५॥

चतुरङ्गुलपर्यन्तं निवेश्याः सर्वसारिकाः ।
दण्डस्य ककुभस्याधः सन्धौ तुम्बे निवेशयेत् ॥१६॥

तृतीयतुर्ययोः[3] सार्योर्मध्येऽधः[4] स्याद् द्वितीयकम् ।
[5]विस्तारेणाधिकं तुम्बं किंचित् पूर्वात्परं भवेत् ॥१७॥

विधाय द्व्यङ्गुले दण्डाग्रतो रन्ध्रमधः क्षिपेत् ।
तस्मिन् शङ्कुं चलं रन्ध्रं दधत् [6]कण्ठेऽङ्गुलान्ततः ॥१८॥

शरपुङ्खाकृति मेरुमधस्तादङ्गुलोच्छ्रयम् ।
कृत्वा ततः[7] स्थिरं शङ्कुं किंचिदग्रे निवेशयेत् ॥१९॥

मिश्रलोहमयी श्लक्ष्णा वर्तुला च समा दृढा ।
गजकेशनिभा तन्त्री निबध्या ककुभे दृढम् ॥२०॥

[8]ईषत्संस्पृष्टनलिका सारिका-मूर्ध्वदेशगा[9] ।
मेरोरुपरि नीता[ऽ]थ प्रान्ते लग्ना द्वितीयके ॥२१॥

वेष्टिता चलशङ्कौ सा कर्तव्या सुदृढा बुधैः ।
[10]चलशङ्कोर्भ्रामणेन तद्गले रन्ध्रदेशगम् ॥२२॥

[11]वक्रो(क्त्रो ?)भयान्तं विन्यस्य [12]लौहं कीलं पुनः स च ।
स्थिरशङ्कुगल[च्]छिद्रे निवेश्यो[13] दार्ढ्यहेतवे ॥२३॥

एवमेषा भवेल्लघ्वी किन्नरी किन्नरप्रिया ।
त्रिस्थानस्वरसम्पत्तिरस्यां राज्ञा निवेदिता ॥२४॥

---

[1] A. स्या
[2] D. E. ० न्या ततः
[3] A. तूर्य०
[4] D. E. मध्येन
[5] E. विस्तरेण०
[6] A. कण्ठे गुला ततः
[7] A. omits विसर्ग
[8] A. ० संस्पृष्टे
[9] D. E. add विसर्ग
[10] E. ० शंके०
[11] E. धक्रो०
[12] E. भौह कील
[13] D. E. omit निवेश्यो

उपर्यधस्ताच्चत्वारश्चत्वारस्तु स्वराः पृथक् ।
मध्यसप्तकतो न्यस्या यथा नाद[:]स्फुटो भवेत् ॥२५॥

केचिद्द्वाविंशतिं प्राहुः सारीणामिह तद्विदः ।
अत्र [1]कंचित् स्वरं स्वीयरागस्यापेक्षया[2] सुधीः ॥२६॥

कल्पयेत् स्थायिनं[3] तस्मादारभ्य गणयेत् क्रमात् ।
सारीककुभयोर्मध्ये सप्तकद्वितयं ततः ॥२७॥

वाद्या किन्नरवीणायास्तन्त्री दक्षिणपाणिना ।
तर्जन्याद्यङ्गुलीनां तु त्रितयेनाथ पाणिना ॥२८॥

वामेन, [4]तिसृभिस्ताभिरङ्गुलीभिस्तु तन्त्रिकाम् ।
स्वरागहेतुकस्वरव्यक्तये [5]तत्स्थसारिकाम् ॥२९॥

अवलम्ब्य स्थितां तन्त्रीं मसृणां[6] पीडये[च्]छनैः ।
इति लघ्वी समादिष्टा, किन्नर्यथ परोच्यते[7] ॥३०॥

॥ इति लघ्वी किन्नरी ॥१॥

एतस्या अधिका दैर्घ्ये द्वादशाङ्गुलमानतः ।
परिणाहेऽङ्गुलेनापि तन्त्री स्नायुमयी भवेत् ॥३१॥

आलापिन्यां यथापूर्वमुक्तं तुम्बं तृतीयकम् ।
तथा[ऽ] स्यामपि कर्तव्यमेवमेषा [8]त्रितुम्बिका ॥
लघ्वीवदस्यां विज्ञेयं लक्ष्मशेषं विजानता ॥३२॥

॥ इति बृहती किन्नरी ॥२॥

तिस्रः किन्नरवीणा[:]स्युर्बृहद्देशीसमाश्रिताः ।
बृहती मध्यमा लघ्वीत्ययथासां लक्षणं ब्रुवे ॥३३॥

अत्राङ्गुलं निस्तुषैः[9] स्यात् षड्भिस्तिर्यग्यवोदरैः ।
[10]पञ्चाशदङ्गुलो दैर्घ्ये परिणाहे षडङ्गुलः ॥३४॥

वैणवः खादिरो वाथ रक्तचन्दनजोऽथव. ।
कांस्यजो वा भवेद्दण्डो ऋजुः श्लक्ष्णो व्रणोज्झितः ॥३५॥

दण्डमानं दधद् गर्भे सुषिरं पृथुलं समम् ।
शाकजः ककुभस्तस्य दण्डो दैर्घ्ये षडङ्गुलः ॥३६॥

---

[1] D. E. किंचित् [2] D. E. ० स्योपेक्षया [3] A. स्थायिनां
[4] E. तिसृति०
[5] A. ० वक्तयेत्स्वसारिकाम् । D. E. व्यक्तये तत् स्वसारिकाम्
[6] D. ०मसृणं [7] A. प्रोच्यते [8] E. त्रितुछिका
[9] A. ०षैं [10] A. पञ्चदशाङ्गुलो D. E. पंचांशदङ्गुलो



ककुभस्य शिरस्त्वस्य दीर्घं स्याच्चतुरङ्गुलम् ।
चतुरङ्गुलविस्तारमु[च्]छ्राये[1] द्व्यङ्गुलं मतम् ॥३७॥

ककुभस्य तु दण्डं तु वीणादण्डान्तरे क्षिपेत् ।
परिशेषश्च[2] दण्डांशस्तावान्[3] यावति शेषिते ॥३८॥

ककुभस्य शिरोमध्यवीणादण्डान्तमध्यतः ।
[4]तन्त्रीभागस्तुरीयांशाधिकत्र्यङ्गुलको भवेत् ॥३९॥

निदध्यात् काकुभे मूर्ध्नि श्लक्ष्णां कूर्मवदुन्नताम् ।
परितोऽर्धाङ्गुलन्यूनां पत्रिकामायसीं समाम् ॥४०॥

नादातिशयसिद्ध्यर्थं वीणावादनकोविदः ।
सार्धाङ्गुलद्वयं त्यक्त्वा वीणादण्डस्य मूर्धतः ॥४१॥

अर्धाङ्गुलपरीणाहं विदध्यात् सुषिरं ततः ।
[5]अधस्तात्तिर्यगपरं रन्ध्रं सो(चो)भयतो मुखम् ॥४२॥

अधस्तादूर्ध्वरन्ध्रस्य सार्धद्व्यङ्गुलके भवेत् ।
मेरुः [6]सगलरन्ध्रेण कर्तर्या चान्वितो भवेत् ॥४३॥

मेरुरन्ध्रस्य वीणाया दण्डस्य च [7]तयान्तरम् ।
[8]द्व्यङ्गुलं सयवं ज्ञेयं मेरुरङ्गुलमु[च्]छ्रितः ॥४४॥

सार्धाङ्गुलान्तरे शङ्कुः स्थिरो मेरोः पुरो भवेत् ।
अत्र [9]तिर्यग् भवेद्रन्ध्रं [10]चलशङ्कुवदायतम् ॥४५॥

[11]सिन्दूरेणाथवा वस्त्रकज्जलेनाथवा युतम् ।
[12]श्लक्ष्णेष्टकायाश्चूर्णेन मर्दयेन्मदनं[13] घनम् ॥४६॥

विमिश्रास्तेन कर्तव्याः सारिकाः स्युश्चतुर्दश ।
अष्टादशाथवा दण्डपृष्ठे न्यस्या[14] यथायथम् ॥४७॥

[15]ताश्चतस्रो निवेश्यास्तु तारसप्तकसिद्धये ।
मन्द्रसप्तकसिद्ध्यर्थं सारीद्वन्द्वं परे जगुः ॥४८॥

---

[1] A. ० मुछ्रये [2] A. परिशेष्यस्य D. E. परिशेष्यश्च
[3] A. तावन् यावन्विशेषिते [4] S. R. तन्त्रीभागस्तृतीयांश०
[5] A. ०त्तीर्यग० E. अधस्ती त्तिर्यग० [6] A. सागलं०
[7] A. looks like लथान्तरम् E. तयान्तरम्
[8] A. अङ्गुलं [9] A. तीर्यग्
[10] A. ०शङ्खु० [11] cf. S. R. VI. 302
[12] A. ०कायाश्च पूर्णेन [13] E. मर्दन्मदनं
[14] A. न्यस्यात् [15] A. ताश्चतिस्रो

एवं त्रिस्थानसंशुद्धरागव्याप्तिर्भवेदिह ।
आमन्द्रसप्तकान्मध्य[1]-सप्तकावधियुक्तितः[2] ॥४९॥

सार्धाङ्गुलपरीणाहास्तथा[3] सार्धाङ्गुलायताः ।
गृध्रवक्षो[ऽ]स्थिनलिका यद्वा [4]तच्चरणास्थिजा[ः] ॥
[5]आयस्यः कांस्यमय्यो वा नलिकाः [6]सारिका मताः ॥५०॥

मौलोर्ध्वतन्त्रिकापार्श्वे तन्त्र्यौ द्वे [7]षड्जगे यदि ।
ह्रस्वा पञ्चमगा चेत् स्यात् [8]षड्जग्रामा भवेदियम् ॥५१॥

ऊर्ध्वतन्त्री यदि [9]भवेन्मध्यमस्वरयोगिनी ।
तत्पार्श्वे तन्त्रिकाद्वन्द्वं षड्जमध्यमगं यदि ॥५२॥

मध्यमग्रामगा ज्ञेया तदेयं किन्नरी बुधैः[10] ।
[11]येन येन स्वरेणैवं योगस्तन्त्र्याः प्रतन्यते ॥५३॥

सारणाभेदमाश्रित्य सा स्यात्तत्तत्स्वराह्वया ।
तां तां वा मूर्छनामस्यामभ्यसेत्तद्विदग्रणीः[12] ॥५४॥

स्वस्थाने [13]प्रकृतीकृत्य षड्जं स्वश्रुतिपेशलम् ।
स्वरप्रबन्धना[ः]स्थाप्या दण्डपृष्ठेऽथ [14]सारिकाः ॥५५॥

तास्विष्टरागं निपुणमालपेत् स्वस्थमानसः ।
वाममध्यातर्जनीभ्यां सारिकोपरि तन्त्रिकाम् ॥५६॥

समध्यया प्रदेशिन्या दक्षहस्तस्य तामथ ।
सानामया पार्श्वतन्त्रीयुगलं वादयेन्मृदु[15] ॥५७॥

कर्मणो दक्षहस्तस्य स्थानमाहुर्मनीषिणः ।
[16]सारीककुभयोर्मध्येऽथोच्यन्ते[17] हस्तजाः क्रियाः ॥५८॥

आसारणं च कर्षश्च तथा कम्पनताडने ।
खण्डनावर्तिताख्ये च विपर्यस्तं च सप्तमम् ॥५९॥

इति वामकरस्येमे व्यापाराः सप्त कीर्तिताः ।
घट्टनं प्रथमं चावघट्टनं तु द्वितीयकम् ॥६०॥

---

[1] A. ०मध्या [2] A. D. ०युक्ततः [3] A. ०हस्तथा
[4] A० रणस्थि० [5] cf. S. R. VI. 292 [6] A. कारिका
[7] E. षड्जा जयदि [8] D. E. षड्जा ग्रामो [9] D. E. ०मध्यमस्तर०
[10] A. बुद्धैः [11] A. एन एन [12] A. ०तद्विद०
[13] A. looks liks स्त्रकृति अंत्य, [14] A. सरिकाः
[15] A. adds विसर्ग [16] E. ०क़कुम्भ० [17] A. प्रोच्यते



निरन्तरालं[1] वि[च्]छर्दः कर्तरी पञ्चमी स्मृता[2] ।
इति दक्षिणहस्तस्य[3] व्यापाराः[4] पञ्चधोदिताः ॥६१॥

आसारणं तदा ज्ञेयं यदा गच्छति मध्यमा ।
[5]निष्पीड्य तन्त्रिकामूर्ध्वं[6] ॥ इत्यासारणम् ॥१॥

आकर्षोऽस्य विपर्ययात् ॥६२॥ । इत्याकर्षः ॥२॥

तर्जनीमध्यमे चैकस्वरां संपीड्य तन्त्रिकाम् ।
कम्प(म्पे ?)ते चेत्तदाख्यातं कम्पनं पूर्वसूरिभिः ॥६३॥

॥ इति कम्पनम् ॥३॥

[7]तिर्यगस्यास्ताडनया ताडनं परिकीर्तितम् ।

॥ इति ताडनम् ॥४॥

खण्डनं [8]ताडनादेकस्थाने मध्यमया[9] भवेत् ॥६४॥

॥ इति खण्डनम् ॥५॥

मध्यमा तन्त्रिकामेकस्वरस्थाने निपीड्य चेत् ।
ऊर्ध्वस्वरं सानुनादं गत्वोत्क्षिप्त्वा तु तर्जनीम् ॥
पूर्वस्थानादधो गच्छेद्यदैवावर्तितं[10] तदा ॥६५॥

॥ इत्यावर्तितम् ॥६॥

[11]मध्यमातर्जनीकर्म तर्जनीमध्यमागतम् ।
अन्योऽन्यव्यत्यये कर्म विपर्यस्तं तदोदितम् ॥६६॥

॥ इति विपर्यस्तम् ॥७॥

॥ इति वामकरप्रचाराः ॥

यद्यन्तस्तर्जनी हन्ति तन्त्रिकां[12] घट्टनं तदा ।
तत् त्रिधा गदितं पर्वघट्टनं पार्श्वघट्टनम् ॥
नखाग्रघट्टनं चेति नाम्नैव [13]व्यक्तलक्षणम् ॥६७॥

॥ इति त्रिविधं घट्टनम् ॥१॥

तन्त्रीं[14]पृष्ठेन चेद्धन्ति तदा स्यादवघट्टनम् ॥६८॥

॥ [15]इत्यवघट्टनम् ॥२॥

---

[1] D. E. omit अनुस्वार [2] A. adds विसर्ग
[3] A. ०हस्तस्या [4] D. E. प्रचाराः
[5] A. निपीड्य D. E. निःपीड्य [6] A. ०मार्धं
[7] A. तीर्यग० [8] D. E. तीडना० [9] A. मध्यमयो
[10] A. आवर्ति D. E ०यदैकवर्तितं [11] A. मध्य०
[12] D. E. omit अनुस्वार (E.तत्रि०) [13] E. व्यक्ति०
[14] A. E. omit अनुस्वार [15] A. इत्व०

एतच्चतुर्विधं कर्म कार्यं मध्यमयापि च ।
प्रदेशिनी मध्यमा वा कुर्वती[1] तन्त्रिकाहतिम् ॥६९॥

तथा प्रकुरुते घातान्तरं न श्रूयते यथा ।
निरन्तरालमेवं स्यात् श्रोतृ-(स्याच्छ्रोतृ)चित्तहरं परम् ॥७०॥

॥ इति निरन्तरालम् ॥३॥

हन्ति चेत्तर्जनी बाह्ये तन्त्रिकां मध्यमा तथा ।
अन्तर्घातं प्रकुरुते [2]प्रदेशिन्यनुवर्तिनी ॥
यत्रैवमेतयोर्भूरिक्रिया [3]विच्छर्दकस्तु सः ॥७१॥

॥ इति वि[च्]छर्दकः ॥४॥

वि[च्]छर्दवत् स्थितिमतीं तर्जनीमनुसृत्य चेत् ।
मध्यमा बहिराहन्ति तर्जनीं कर्तरी तदा ॥७२॥

॥ इति कर्तरी ॥५॥

॥ इति दक्षिणहस्तव्यापाराः ॥

परिवर्ते द्रुते पाणे-[4]र्वाद्यं स्यात्(द्)घुटिताभिधम् ॥७३॥

॥ इति घुटितम् ॥१॥

पद्मपत्रपतद्वर्षाबिन्दुवद्यत्र घातनम् ।
तत् स्फुटं गदितं वाद्यं श्रोतृचित्तसुखावहम् ॥७४॥

॥ इति स्फुटम् ॥३॥[5]

गम्भीरं [6]जलदध्वानानुसाराद्गदितं बुधैः ।

॥ इति गम्भीरम् ॥४॥

कपोतकूजितकलं कलमुक्तं कलाविदा ॥७५॥

॥ इति कलम् ॥५॥

तत्स्वस्थं स्वरनिष्पत्ति-[7]र्यथावद्यत्र दृश्यते ।

॥ इति स्वस्थम् ॥६॥

कर्णा(र्ण ?)स्फोटकरं वाद्यं झिल्लिकेति निगद्यते ॥७६॥

॥ इति झिल्लिका ॥७॥

[8]तद्दोलिकाभिधं यत्र प्रचारः स्यात् स्वराधिकः ।

॥ इति दोलिका[9] ॥८॥

अनवस्थितसंस्थानमनालम्बनमीरितम्[10] ॥७७॥

॥ इत्यनालम्बनम् ॥९॥

---

[1] A. कुर्वीत
[2] A. प्रदेशन्यनुवर्तनी
[3] A. विछेर्दक०
[4] A. omits रेफ
[5] The second variety is missing.
[6] A. जलज०
[7] A. omits रेफ
[8] A. तद्दोल्लिका०
[9] E. दोलिक:
[10] D. E. ०नालम्बम०



[1]प्रबला स्याह(द्ध)तिर्यत्र तद्वाद्यं किट्टमुच्यते ।

॥ इति किट्टम् ॥१०॥

निकुतिस्तद्भवेद् वाद्यं स्वरो यत्र बहिर्व्रजेत् ॥७८॥

॥ इति निकुतिः ॥११॥

इत्येकादशधा प्रोक्तं वीणावाद्यस्य लक्षणम् ।
शिक्षाभ्यासमृते राज्ञा वीणावाद्यं [2]सुदुष्करम् ॥७९॥

मत्वेवं दर्शितं वाद्यं वादकानां सुखावहम् ।
अत्रैव ककुभे वामभागे शङ्कूपरिस्थले ॥८०॥

पत्रिका प्राक्तना[3] या तु तस्याः किंचिदिवोन्नता[4] ।
संस्थाप्या[5] पत्रिका तस्यां बन्धयेत्तन्त्रिकायुगम् ॥८१॥

[6]तस्माच्छङ्कोरधोदेशे बन्धनीयाः प्रयत्नतः ।
सारिकास्तत्र पूर्वस्य।स्तन्त्रिकायाः समा दृढम् ॥८२॥

अध[:]स्थले तन्त्रिकायास्तिस्रः[7] स्थाप्याः[8] परा अपि ।
तिस्रस्तदन्तिमायास्तु स्थाप्यास्तन्त्र्यस्तु तत्र च ॥८३॥

अनुमन्द्राभिधाः[9] सप्तस्वराः[10] स्थाप्या यथायथम् ।
पूर्वोक्तरीत्या तत्रानुमन्द्रसप्तकवादनम् ॥८४॥

नखरैः साधयेद्धीमान् शिक्षाभ्यासवशानुगैः ।
पुनर्वादनविन्यासविशेषं वक्ति तत्त्ववित् ॥८५॥

वीणादण्डः परः कार्यः[11] पूर्वस्मान्न्यूनितो[ऽ][12]ङ्गुलैः ।
गुणेन्दुसंख्यैरन्ते[ऽ]स्य दृढा लोहशलाकिका ॥८६॥

बध्यते सदृशा वक्त्रे पश्चात् ककुभवामतः ।
पालिकायां पाणिरूपां शलाकां स्थापयेदनु ॥८७॥

कर्णशङ्कोर्मूर्धदेशे शलाकाग्रं फणाकृति[13] ।
निधाय कर्णदेशस्थं शङ्कुरन्तरतो यथा ॥८८॥

---

[1] A. प्रवाला E. प्रबलस्या०
[2] D. E. सुदुःकरम्
[3] A. E. प्राक्तनया
[4] A. ०वोन्निता E. ०वोन्नतां
[5] A. संस्थाप्य
[6] E. ०छंवो०
[7] A. तिस्र
[8] A. omits विसर्ग
[9], [10] A. omits विसर्ग
[11] E. omits विसर्ग
[12] A. ०नितांगुलैः
[13] A. adds विसर्ग

तथा द्रोणीं[1] [2]तत्फणायां लग्नां कृत्वा [3]तदूर्ध्वतः ।
प्रसार्य तन्त्रिकामुक्तरीत्या शङ्कुयुगेन ताम् ॥८९॥

नीत्वा सुदृढतां पूर्वं[4]-तन्त्रिकासदृशध्वनिम् ।
विधाय [5]वादयेत् प्राज्ञः [6]कम्रया[ऽ]भ्यासयोगतः ॥९०॥

वामहस्तानामिकाया अन्तरे सक्तया दृढम् ।
आसारणादि यद्वाद्यं चतुर्धा प्राक् प्रकीर्तितम् ॥९१॥

तदिहापि यथायोग्यं योजयेद् वाद्ययोगयुक् ।
दुष्करामन्यशास्त्राणां[7] दृष्ट्या[8] मत्वेह [9]किन्नरीम् ॥९२॥

पटु तद्वादने वाद्यं सर्वविद्यागुरुर्व्यधात् ।
स्वकीयानुभवादेतत् साक्षात् [10]कृत्वोपदर्शितम् ॥९३॥

अनन्यदृष्टमधुना ग्रन्थकृत्प्रक्रियोच्यते[11] ।
तत्र रत्नाकरादीनां दृष्ट्या सारीप्रकल्पनम् ॥९४॥

[12]सुखबोधाय शिष्याणां दर्शयत्यवनीपतिः ।
[13]सारीमस्तकमध्यानां यदिहान्तरमिष्यते ॥९५॥

मेरुमूर्ध्नं[14] उपक्रम्य यथावत् प्रतिपाद्यते[15] ।
तत्राद्यमन्तरं पञ्चाङ्गुलं सयवमीरितम् ॥९६॥

तद्द्वितीयं तु[16] चतुरङ्गुलकं [17]तत्तृतीयकम् ।
तुर्यं चैव यवन्यूनं पञ्चमं त्र्यङ्गुलं तथा ॥९७॥

यवाधिकं[18] ततः षष्ठं यवोनं द्व्यङ्गुलं पुनः ।
सयवं द्व्यङ्गुलं ज्ञेयमन्तरालं[19] तु सप्तमम् ॥९८॥

वसुसंख्यं पुनर्गेयं सार्धं[20] द्व्यङ्गुलमन्तरम् ।
नवमं[21] तु यवार्धोनं[22] दशमं पुनरन्तरम् ॥९९॥

---

[1] A. omits अनुस्वार [2] E. ०तत्यत्फणायां
[3] D. तमूर्ध्वतः E. तु मूर्वतः [4] E. adds अनुस्वार
[5] A. वादेयेत् [6] A. कम्नाया [7] A. omits अनुस्वार
[8] D. E. दृष्ट्वा [9] A. D. किंन्नरीम् E. किंन्नरी
[10] A. looks like कर्त्वोप० [11] D. E. ०प्रत्ययोच्यते
[12] E. सुखे
[13] cf. S. R. VI. 294–304 for 96–108 above.
[14] A. ०मूर्घं० [15] E. प्रतिपाद्येते [16] D. E. च
[17] A. तस्तृ० [18] E. omits अनुस्वार [19] A. ०राले
[20] D. E. omit अनुस्वार [21] E. नवम नु [22] A. यवोर्घोनं E. यवार्वोनं



सार्धाङ्गुलमितं ज्ञेयं, यवोनं[1] द्व्यङ्गुलं ततः ।
एकादशं[2], द्वादशं तु तत्तृतीयांशवर्जितम् ॥१००॥

त्रयोदशं ततो ज्ञेयं [3]सतृतीयांशमङ्गुलम् ।
अङ्गुलं मानमाख्यातमन्तरे तु[4] चतुर्दशे ॥१०१॥

द्वितीयमन्तराले तु न्यस्यं तुम्बमधोमुखम् ।
तस्मिन् दण्डे ततोऽधस्तादन्यत्ककुभमूर्धतः ॥१०२॥

अधस्तात्तुम्बकं न्यस्यं, [5]तस्याङ्के परिधिर्मुखे ।
षट्त्रिंशदङ्गुलो ज्ञेयः प्रथमेऽधस्तने पुनः ॥१०३॥

किंचिन्न्यूनो भवेत्तस्मान्निवेश्यास्तत्र सारिकाः (तन्त्रिकाः?) ।
ईषदस्पृष्टसरिकाः पूर्वमेव प्ररूपिताः[6] ॥१०४॥

मुक्ततन्त्रीभवस्तत्र जायते प्रथमः[7] स्वरः ।
चतुर्दशान्तरैरन्यैं[8]—र्भवेयुस्ते चतुर्दश[9] ॥१०५॥

सप्तकद्वयमेवं स्यात् सतारस्वरमत्र तु ।
श्रुतीरपि विचिन्वन्ति तज्ज्ञास्तद्देशभागतः ॥१०६॥

सप्तकत्रयपूर्त्यर्थं सार्यः[10] स्युरधिका यथा ।
तथा प्रागेव गदितमन्तराण्यपि तत्त्वतः ॥१०७॥

[11]स्वराविर्भावबोध्यानि सुप्रबोध्यानि तद्विदाम् ।
एवं यदन्तरं प्रोक्तं सारीणामिह तत्त्वतः ॥१०८॥

तददृष्टाय विज्ञेयं न दृष्टपरिपोषकम् ।
दृष्टद्वारा पुनरिदमदृष्टायोपपद्यते ॥१०९॥

तस्मात् (द्) दृष्टप्रधानेऽस्मिन् शास्त्रे[12](०स्मिञ्छास्त्रे)
राजोपदेशतः ।
स्वराविर्भावमाज्ञाय[13] स्थाप्याः[14] स्युः सा[?]का बुधैः ॥११०॥

॥ इति बृहतीकिन्नरीलक्षणम् ॥

मध्यमाया अथो लक्ष्म वक्ष्यते शास्त्रसम्मतम् ।
[15]दण्डस्य दैर्घ्यं विज्ञेयं त्रिचत्वारिंशदङ्गुलम् ॥१११॥

---

[1] E. omits अनुस्वार [2] E. ०दशां [3] D. E. यत्तृयांश०-
[4] D. E. च [5] D. तुम्बके E. तुम्बंके [6], [7] A. omits विसर्ग
[8] D. E. ०रन्ये० [9] A. adds विसर्गं
[10] A. सार्घं [11] D. E. omit this verse.
[12] A. looks like शालि० [13] A. ० जाय [14] A. omits विसर्गं
[15] cf S.R. VI 307-27 for 111–37 above.

परिधिर्मध्यमायाश्च द्वियवोनषडङ्गुलः ।
अस्याः[१] स्यात् काकुभं शीर्षमायामे चतुरङ्गुलम् ॥११२॥

[२]सार्धंत्र्यङ्गुलविस्तारं, दण्डः पञ्चाङ्गुलोऽस्य[3] तु ।
वीणादण्डस्य सुषिरे क्षिपेद्दण्डं च काकुभम् ॥११३॥

तावांश्च [४]परिशेष्योऽसौ यावतः परिशषणे ।
[५]वीणादण्डान्तककुभशिरो मध्यान्तरस्थितः ॥११४॥

सारिकावयवो माने [६]त्रिंशोनत्र्यङ्गुलो[७] भवेत् ।
[८]स्याद्यवोनाङ्गुलद्वन्द्वो दण्डान्ते सारिको(च्)छ्रयः ॥११५॥

[९]मेरोरुपान्ते सारीणामुत्सेधः[१०] स्यात्तदर्धतः ।
सारीणामन्तरस्याथ परिमाणमिहोच्यते ॥११६॥

सार्धाङ्गुलचतुष्कं[११] तु तत्र प्रथममन्तरम् ।
सयवत्र्यङ्गुलं ज्ञेयं द्वैतीयकमिहान्तरम्[१२] ॥११७॥

तृतीयमन्तरं [13]त्र्यंशाभ्यधिकैरङ्गुलैस्त्रिभिः ।
पूर्णत्र्यङ्गुलकं तुर्यं पञ्चमं पुनरन्तरम् ॥११८॥

[१४]सार्धद्वयङ्गुलकं ज्ञेयं, यवैकेनाधिकं पुनः ।
षष्ठं, [१५]यवद्वयन्यूनमङ्गुलं (०द्वयङ्गुलं)सप्तमं तथा ॥११९॥

[१६]द्व्यङ्गुलं सयवार्धं स्यादष्टमं द्व्यङ्गुलं पुनः ।
विज्ञेयं सयवद्वन्द्वद्व्यङ्गुलं नवमं तथा ॥१२०॥

यवोनमङ्गुलद्वन्द्वमन्तरं दशमं भवेत् ।
सपादाङ्गुलमानानि त्रीण्यन्यान्यन्तराणि च ॥१२१॥

---

[१] A. D. अस्य E. अस्या, the 'mātrā' of ा seems to be deleted.
[२] D. सार्द्धद्वयङ्गुल० E. सर्धद्वयङ्गुल० S. R. सार्द्धत्र्यङ्गुल०
[3] E. ०लोस्वतु
[४] S.R. परिशेपोऽसौ
[५] E. वीडादण्डस्य सुखिरे क्षिपेदन्त ककुभ- शिरो etc.
[६] D. E. विंशोन०
[७] A. ०लं
[८] A, साद्य……द्वन्द्वौ ।
[९] A. मेरु०
[१०] A. ०धं
[११] D. the अनुस्वार on क is joined with a vertical line (full stop) on its top.
[१२] A. ०मिहोत्तरम्
[१३] E. त्र्यशा०
[१४] D. E. सार्धा०
[१५] A. यवद्वयात् E. यवद्वयं
[१६] D. E. omit this verse



स्यादेकाङ्गुलमानेन चतुर्दशमिहान्तरम् ।
सारीणां मस्तकं [१]सार्धयवमानमिह स्मृतम् ॥१२२॥

अत्रापि त्र्यङ्गुलं वीणादण्डस्य परिशिष्यते ।
लक्ष्मशेषं विजानीयात्(द्)बृहतीकिन्नरीगतम् ॥१२३॥

॥ इति मध्यमा किन्नरी ॥

उच्यते [२]लक्ष्मणोपेता किन्नर्यथ लघीयसी ।
लघीयस्या[3] दण्डमानं[४] स्यात् [५]पञ्चत्रिंशदङ्गुलम् ॥१२४॥

[६]त्र्यंशाधिपञ्चाङ्गुलकः परिधिस्तस्य कीर्तितः ।
ककुभस्य शिरो ज्ञेयमङ्गुलत्रयविस्तरम् ॥१२५॥

ककुभस्य तथा दण्डो वीणादण्डे निवेश्यते ।
तथास्य परिशेषः स्यात्(द्)यथा दण्डान्ततन्त्रिका ॥१२६॥

ककुभस्य शिरोमध्यात्[७](द्)यावत्त्र्यङ्गुलसम्मिता ।
दण्डान्तसारिकोत्सेधः सार्धाङ्गुलमितो मतः ॥१२७॥

[८]मेरोरुपान्ते तस्यार्धं [९]सारिकामीढिकान्तरम् ।
प्रोच्यते, तत्र पूर्वं स्यात् सयवं चतुरङ्गुलम् ॥१२८॥

द्वियवाङ्गुलयुग्मं स्यात्(द्)द्वितीयं, च तृतीयकम् ।
यवोनाभ्यामङ्गुला(ली)भ्यां, [१०]पादोनत्र्यङ्गुलं पुनः ॥१२९॥

तुर्यं, पञ्चममत्र स्याद् यवार्धोनाङ्गुलद्वयम् ।
यवैः सार्धाष्टभिः षष्ठं, सप्तमं पुनरीरितम् ॥१३०॥

यवोनाङ्गुलयुग्मेन सार्धाङ्गुलमथाष्टमम्[११] ।
यवाष्टकं तु नवमं दशमैकादशे पृथक् ॥१३१॥

सपादाङ्गुलके, तत्र द्वादशं च त्रयोदशम् ।
[१२]यवन्यूनाङ्गुलमितमन्तरं स्याच्चतुर्दशम् ।
एकाङ्गुलं तथा सारीमस्तकं यवसम्मितम् ॥१३२॥

---

[१] D. E. ०माना०
[२] D. लक्षणो० E. लक्षंणे०
[3] A. लघीयसी०
[४] E. मानां०
[५] A. ०त्र्यंश० ।
[६] D. त्रिंशाधि० E. त्रिशाधिपंचागुलकः
[७] A. ०मध्यां D. E. look like ०मध्यान्
[८] S. R. मेढकोपान्ते
[९] A. ०मीहिकान्तरम् D. सरिका० E. ०मीठिकान्तरम्
[१०] A. पादेन०
[११] D. E. ०ष्टकम्
[१२] A. omits this line.

मध्यमायामिवात्रापि [१]मेढकस्थानमिष्यते ।
अत्र किन्नरवीणायां यवन्यूनाङ्गुलत्रयम् ॥१३३॥

दण्डस्य परिशेषो हि परिशेष्यो विजानता ।
[२]शेषं तु लक्षणं ज्ञेयमेतस्यां[3] मध्यमागतम् ॥१३४॥

[॥ इति लघ्वी किन्नरी ॥]

[४]पञ्चाशदङ्गुलादूर्ध्वं[५] न न्यूनं[६] [७]त्रिंशदङ्गुलात् ।
[८]परिमाणं[९] विधातव्यं किन्नरीणां कदाचन ॥१३५॥

यदत्र रक्तिमाधुर्यं मौलिभूतं न[१०] विद्यते ।
एतयोर्मानयोर्मध्ये मानं स्याद् वादकेच्छया ॥१३६॥

एत(अत)एव मया मार्गाश्रितं वीणाद्वयं पुरा ।
गतानुगतिकत्वेन प्रोक्तन्नो रक्तिहेतुतः ॥१३७॥

अत्रापि राजराजस्योपदेशं प्राप्य तद्विदः ।
श्रुतिस्वरप्रदेशानां विवेकं[११] कर्तुमीश्वराः ॥१३८॥

[१२]रागालापनमत्राहुः केचित् पण्डितमानिनः ।
शार्ङ्गदेवादयस्तेषां मतं न मम सम्मतम् ॥१३९॥

रागोल्लासे यतस्तेषामुत्पत्तिः प्राक् प्रदर्शिता ।
पुनरुक्तौ पुनस्तेषां पुनरुक्तिर्भवेन्न किम् ॥१४०॥

तथापि बालबोधार्थं तन्मार्गाश्रयिणा[13] मया ।
केषाञ्चित् कुतुकित्वेन दर्श्यंते वादनक्रमः ॥१४१॥

[१४]मध्यस्थानस्थितं कृत्वा मध्यमं स्थायिनं स्वरम् ।
परानारुह्य [१५]पनिसान् स्वरान् पञ्च क्रमेण च ॥१४२॥

अवरोहन् सतः स्थायिपर्यन्तान्[१७] धैवतं यदि ।
हन्ति स्वस्थानमाख्यातं मध्यमादेस्तदादिमम् ॥१४३॥

[१] A. मेटक० D. मेढकं E. पेढकं [२] D. E. शेषं ल विज्ञेय०
[3] A. omits अनुस्वार
[४] A. पञ्चादश० [५], [६], [७] E. omits अनुस्वार
[८] E. omits this line and the next one.
[९] A. omits अनुस्वार [१०] A. च [११] E. omits अनुस्वार
[१२] D. ०लपन० E. रागलेपन० [13] D. E. ०णान्
[१४] cf. S. R. VI. 328–32 for 142–46 above. [१५] E. ष०
[१६] A. omits विसर्ग । सतः stands for षड्जतः । E. अवरोहत सनः
[१७] E. ०यंन्तात्



स्वस्थानत्रितयेऽन्यस्मिन् द्व्यर्धमर्धस्थितं स्वरम् ।
तद्वद् द्विगुणमारुह्य पूर्वं स्वस्थानमाव्रजेत् ॥१४४॥

षाडवादिषु रागेषु पूर्वपूर्वस्वरस्य तु ।
क्रमादसंभवे गच्छेत् सर्वत्रैव परं परम् ॥१४५॥

यद्रत्नाकरकारेण मन्द्रमारभ्य वर्णितम् ।
रागालपनमेतन्मे रक्तिहानेर्न सम्मतम् ॥१४६॥

यतस्त्रिस्थानलाभोऽस्मिन्न धस्थानान्तरास्थितेः ।
न भवेत्तद्गता रक्तिः कुतस्तेन तदुच्यताम् ॥१४७॥

पञ्चस्वरावरोहश्च षड्जे[१] स्थायिनि मन्द्रगे ।
संभवेदपि नो तस्मात् स्वस्थानं स्थाप्यते कथम् ॥१४८॥

षड्जतः स्थायिपर्यन्तमवरुह्य यदीरितम् ।
धैवतस्याभिहननं तदभावे कथं हि तत् ॥१४९॥

तस्मात् सर्वेषु रागेषु मध्यस्थं कञ्चन स्वरम् ।
स्थायिनं परिकल्प्येष्टं रागालपनमारभेत् ॥१५०॥

॥ इति मध्यमादिः ॥१॥

[२]मध्यस्थानस्थमास्थाय मध्यमं स्थायिनं स्वरम् ।
तृतीयं तुर्यपान्कृत्वा गत्वा न्यन्तान् स्वरानथ ॥१५१॥

अवरुह्य गपर्यन्तं विधाय स्थायिनं स्वरम् ।
हत्वा धमवरोहेच्चेत् स्थाय्यन्तं जायते तदा ॥१५२॥

बङ्गालो नाम रागाङ्गं [3]रागज्ञजनसम्मतः ।
पञ्चमोऽपि ग्रहः कैश्चिदस्य त[ज्]ज्ञैरिहेष्यते ॥१५३॥

॥ इति बङ्गालः ॥२॥

स्थायिनो धैवताद् गत्वा त्रिपञ्चचतुरः[४] स्वरान् ।
अवरोहात् पुनः[५] स्थायिस्वरपर्यन्तमेत्य च ॥१५४॥

तत्तृतीयं ततोऽध[:]स्थं कृत्वा स्थायी [६]यदोच्यते ।
तदा स्याद् [७]भैरव[:]स्थायी रि(नि?[८])रस्योद्वीक्ष्यते जनैः ॥१५५॥

॥ इति भैरवः ॥३॥

[१] A. षष्टे
[२] cf. S. R. 343–401 for 151–202 above.
[३] E. रानज्ञ०
[४], [५] A. omits विसर्ग [६] A. तदोच्यते
[७] E. भैवरव [८] S. R. नि० E. रिरेस्यो०

धैवतं स्थायिनं कृत्वा तत्पूर्वं[1] स्वरमेत्य च ।
पञ्चारुह्य[2] चतुर्थं च तृतीयं द्वियंदोच्यते ॥
स्थायिन्यासे वराटी स्यात्तदा [3]स्याद्विग्रहः क्वचित् ॥१५६॥

॥ इति वराटी ॥४॥

स्थायिनमृषभं कृत्वा तदध[:]स्यद्वयं ततः ।
गत्वा स्थायिन [4]एवाथावरोहेत् त्रीन् स्वरानथ ॥१५७॥

पञ्चारुह्य कृते न्यासे ऋषभे गूर्जरी भवेत् ।
गान्धारोऽपि ग्रहः कैंश्चिदिष्यते(ऽ)स्याः स्वरागमे[5] ॥१५८॥

॥ इति गूर्जरी ॥५॥

षड्जं कृत्वा ग्रहं तस्मात् स्वरमेत्यादिमं ततः ।
तृतीयतुर्यावुच्चार्य द्वितीयादीन् स्वरानथ ॥१५९॥

त्रीनारुह्यावरुह्याथ वसन्तः स्याद्[6] ग्रहान्तिमः ।
ऋषभोऽपि ग्रहः कैंश्चिदस्य लक्ष्येषु [7]दृश्यते ॥१६०॥

॥ इति वसन्तः ॥६॥

षड्जं कृत्वा ग्रहं प्रोच्य तृतीयं च चतुर्थकम् ।
आपञ्चमं द्वितीयादीन् क्रमादारुह्य चेत् पुनः ॥१६१॥

क्रमेणैवावरोहेण त्यक्त्वा[8] स्थायिद्वितीयकम् ।
स्थायिनः प्रथमं गत्वा ग्रहं तस्मात् तृतीयकम् ॥१६२॥

तुर्यं तृतीयं चोच्चार्य [9]धन्नासी स्याद् ग्रहान्तिमा ।
वैणिकैः कैंश्चिदेवास्याः पञ्चमोऽपि ग्रहः स्मृतः ॥१६३॥

॥ इति धन्यासी ॥७॥

स्थायिनो(न) ऋषभात् स्पृष्ट्वा परं तस्माद् विलम्ब्य च ।
आन्दोल्य तुर्यं स्पृष्ट्वाथो स्वरौ तुर्यादधस्तनौ ॥१६४॥

ग्रहं ततः परौ तस्माद् द्वितीयं प्रोच्य[10] चेद् ग्रहे ।
न्यस्यते जायते देशी गग्रहा वेयमीरिता ॥१६५॥

॥ इति देशी ॥८॥

गान्धारात् स्थायिनो गत्वा[ऽ]धस्तुरीयं ततः पुनः ।
आषष्ठं स्वरमारुह्यावरुह्य पुनरेव तान् ॥१६६॥

---

[1] E. omits अनुस्वार [2] A. ०रुह्ये [3] D. E. स्यारिः
[4] A. D. E. एवाथ नारोहेत् [5] D. E. ०गमः
[6] A. स्यात् D. E. सद्
[7] A. दृश्यंतें D. adds a dot over श्य in a different ink.
[8] A. त्यक्ता [9] D. E. धन्यासी [10] A. प्रोच्यते



ग्रहादधस्तृतीयं च गत्वा चेन्न्यस्यते ग्रहे ।
देशाख्या स्यात्तदा दृष्टो मध्यमोऽस्या ग्रहः क्वचित् ॥१६७॥

॥ इति देशाख्या ॥९॥

॥ इति रागाङ्गानि ॥

षड्जं कृत्वा ग्रहं तस्मात्(द्) द्वितीयं च तृतीयकम् ।
स्वरमारुह्य तदधस्तात्(द्) विलम्ब्य ग्रहं स्पृशेत् ॥१६८॥

तृतीयतुर्यतुर्याह्वतृतीयान् प्रोच्य विन्यसेत् ।
स्थायिनि प्रोच्यते रागो[1] [2]डोम्बक्री[:]सा जनैः क्वचित् ॥
भूपाली कथ्यते [3]तस्या[:]स्थायी लोकेऽस्ति मध्यमः ॥१६९॥

॥ इति डोम्बक्रीः ॥१॥

पञ्चमं स्थायितां[4] नीत्वा तमादीकृत्य षट्स्वरान् ।
समारुह्यावरोहे च तृतीयं [5]तु विलम्बितम्[6] ॥१७०॥

चतुर्थं कंम्पितं कृत्वा क्रमेण स्थायिनं व्रजेत् ।
एवं प्रथममञ्जर्याः स्वस्थानानां चतुष्टयम् ॥
गान्धारोऽपि ग्रहः कैंश्चिदस्या लक्ष्येषु दर्श्यते ॥१७१॥

॥ इति प्रथममञ्जरी ॥२॥

धैवतं[7] ग्रहमान्दोल्य चतुरस्तदधस्तनान् ।
समारुह्यावरोहेण ग्रहं गच्छेद्यदा तदा ॥
कामोदा स्याद् ग्रहो लोके मध्यमोऽस्याः प्रकीर्तितः ॥१७२॥

॥ इति कामोदा ॥३॥

॥ इति भाषाङ्गानि ॥

षड्जे ग्रहे सह प्राचा परौ प्रोच्य स्वरौ ततः ।
तुर्यं विलम्बितं[8] कृत्वा तृतीयं[9] च द्वितीयकम् ॥
ईषत् स्पृष्ट्वा ग्रहे न्यासे रागो रामकृतिर्भवेत्[10] ॥१७३॥

॥ इति रामकृतिः ॥१॥

मध्यमं स्थायिनं कृत्वा गत्वाधस्तात्तुरीयकम् ।
त्रीनारुह्य ग्रहाधस्तात् स्वरं स्पृष्ट्वा द्वितीयकम् ॥१७४॥

अवरोहन् ग्रहाधस्तात्तुर्यपर्यन्तमेत्य च ।
आरोहक्रमतस्तस्मात्तृतीयं प्राप्य कम्पयन् ॥१७५॥

---

[1] A. रागौ [2] D. डौम्बक्री E. डौबक्रीडा [3] A. तस्मात्
[4] E. स्थायिनां गीत्वा [5] D. E. omit तु [6] E. omits ०बितम्
[7] A. omits अनुस्वार [8] E. बितं (omits विलं)
[9] D. E. तृतीयकम् । D. E. omit च द्वितीयकम् । [10] D. E. भवेत्

स्थायिनि न्यसने [१]गौडकृतिः कृतिषु जायते ।
अस्यास्तु पञ्चमं लक्ष्ये ग्रहं[२] लक्ष(क्ष्य) विदो विदुः ॥१७६॥
॥ इति गौं(गौ)डकृतिः ॥२॥

षड्जे ग्रहेऽधस्तनमेत्य[3] षड्जं पुनर्ग्रहं प्रोच्य ततस्तृतीयम् ।
तुर्यं च कृत्वा तनुकम्पितं च सुपञ्चमं स्थायिन एव तूर्यम् ॥१७७॥

तृतीयकं प्रोच्य पुनर्ग्रहं तथा द्वितीयमान्दोल्य तृतीयकं स्पृशेत् ।
ततो यदि स्यान्न्यसनं[४] ग्रहे तदा रागो भवेद्देवकृतिर्वरिष्ठा ॥१७८॥
॥ इति देवकृतिः ॥३॥

॥ इति क्रियाङ्गानि ॥

कृत्वा ग्रहं धैवतमाशु गत्वा[ऽ]धस्त्यं पुन-[५]र्धैवतमेत्य तस्मात् ।
कृत्वा परं स्थायिनमेत्य तस्मात् पूर्वं समागत्य ततो ग्रहं च ॥१७९॥

आरुह्य च त्रीन् क्रमतस्तृतीयादिकानथो पञ्चमतोऽवरुह्य ।
षट् स्थायिनं प्रोच्य तृतीयकम्पनात् तुर्यं तथा पञ्चमतुर्यकौ च ॥१८०॥

स्पृष्ट्वा तृतीयं खलु वादयित्वा द्वितीयकं च न्यसनं ग्रहे यदा ।
तदा भवेद भैरविका[ऽ]स्य[६] लक्ष्ये* रागस्य गः[७] स्थायितया प्रदिष्टः[८] ॥१८१॥
॥ इति भैरवी ॥१॥

षड्जं[९] ग्रहं मन्द्रमुपेत्य मध्यं तमेव पश्चादवरोहतश्च ।
क्रमाद् ग्रहं प्राप्य तथोपरिष्टाद् गच्छन् पमागत्य च तं विलम्ब्य ॥१८२॥

[१०]तमेव संस्पृश्य धमाव्रजेद्[११] ग्रहं यदावरोहेण समेति वैणिकः ।
छायादिनट्टा† खलु रागराजस्तदा भवेद् वैणिकवृन्दवन्द्यः[१२] ॥१८३॥
॥ इति [च्]छाया नट्टा[13] ॥२॥

कृत्वा ग्रहं षड्जमतः परौ द्वौ सपञ्चमं [१४]षष्ठमुदीरयित्वा ।
ततोऽवरोहेण च षष्ठपञ्चमौ कृत्वा तृतीयादवरुह्य चाग्रहम् ॥१८४॥

[१५]तृतीयतः प्राक्(ग्) द्वितयावरोहात् प्रकम्प्य तुर्यं प्रथमं ततश्च[१६] ।
उक्त्वा परं चेन्न्यसनं ग्रहे स्यात्तदा भवेद्रामकृतिर्बहूक्तिः ॥१८५॥
॥ इति रामकृतिः[१७] ॥३॥

---

[१] D. गौंड E. गौडं
[२] A. omits अनुस्वार
[3] E. ०मोत्य
[४] D. E. स्या न्यसनं
[५] E. omits रेफ
[६] A. च
* D. E. लक्ष्य
[७] A. omits विसर्ग
[८] E. ०ष्टाः
[९] A. षड्ग्रहं E. षड्जग्रहं
[१०] E. तामव
[११] E. ०व्रजे
† E. दितभट्टा
[१२] E. वृन्दं वन्द्याः
[13] E. तष्टा
[१४] E. षड्जष्ट०
[१५] D. E. द्वितीयतः प्राक् द्वितीयावरोहात्
[१६] A. adds विसर्ग
[१७] E. omits विसर्ग



कृत्वा ग्रहं [१]धैवतमत्र तत्परं विलम्ब्य संस्पृश्य ग्रहद्वितीयकौ ।
विलम्ब्य चेत्[२] षड्ग्रहतः [3]पुरस्तात् तृतीयमारुह्य ग्रहादिकद्वौ ॥१८६॥

तृतीयकं चात्र विलम्ब्य [४]तस्मादधस्त्यमारुह्य च संस्पृशेच्च ।
स्पृष्ट्वा ग्रहादित्रितयं ग्रहं च प्रोच्चार्य तस्मात् परतः स्वरं च ॥१८७॥

चेन्न्यस्यते स्थायिनि तत्र रागो [५]मल्हारसंज्ञः प्रभवेत्तदायम् ।
स्थायी पुनः पञ्चम एव [६]कैश्चिल्लक्ष्येषु रागज्ञवरैः प्रदिष्टः ॥१८८॥
॥ इति मल्हारः ॥४॥

प्रोच्चार्य [७]मस्थायितयावरुह्य पञ्चस्वरान् गा(मा)वधिकान् ततश्च(०कांस्ततश्च)।
गत्वा ततो मध्यमतस्तृतीयमारुह्य तस्माच्चतुर[:] स्वरांश्च ॥१८९॥

स्पृष्ट्वा ग्रहं तत्प्रथमं विलम्ब्य षड्जे यदा न्यस्यत[८] एष[९] गौडः ।
कर्णाटपूर्वो भवतीह लक्ष्ये स्थायी पुनः पञ्चम एव दृष्टः[१०] ॥१९०॥
॥ इति कर्णाटगौडः ॥५॥

यदि [११]ग्रहान्मन्द्रनिषादतोऽन्यं स्वरं परं प्रोच्य ततस्तृतीयम् ।
तुर्यं च गत्वा ग्रहतस्तृतीयं [१२]ग्रहाच्चतुर्थं च ततः[13] स्वरांश्च ॥१९१॥

पञ्चावरुह्य[१४]ग्रहतस्तुरीयमधस्तनं स्थायिन एव नीचम् ।
स्थायिस्वरं तत्परकं च कृत्वा स्थायिस्वरा-[१५]त्तुर्यमथो ग्रहाच्च ॥१९२॥

परं समुच्चार्य ग्रहे विमोक्षे [१६]तौरुष्कगौडो भवतीह रागः ।
स एव लोके खलु मालवीति स्थाय्यस्य लक्ष्ये किल पञ्चमोऽपि ॥१९३॥
॥ इति [१७]तौरुष्कगौडः ॥६॥

ग्रहं तमेवाथ [१८] विधाय कृत्वा द्वितीयमुच्चार्य ततः परं च ।
विलङ्घयेल्लङ्घिततः[१९] परांस्त्रीनारुह्य पश्चादवरुह्य तांश्च ॥१९४॥

---

[१] E. हे धैवतगत्र
[२] D. E. चे
[3] E. पुनस्तात्
[४] E. repeats a confused version of "संस्पृश्य……ग्रहादिकद्वौ" from the preceding verse.
[५] A. मल्हारि०
[६] E. कैश्चै०
[७] D. E. यं स्थायि०
[८] A. न्यस्त
[९] D. E. एव
[१०] E. दृष्टाः
[११] D. E. ग्रहा
[१२] A. ग्रहा चतुर्थं
[१३] D. E. ततो
[१४] E. ग्रहता०
[१५] A. ०स्तुर्यं०
[१६] E. तोरुष्कगोडा A. ०गौंडो
[१७] E. तोरुक०
[१८] D. तमेवाधि E. तमेवा विधिधाय
[१९] E. ०ल्लघिततः

प्रकम्प्य तं लङ्घितमेव तस्मात् पूर्वं समुच्चार्य ग्रहं व्रजेच्च ।
तदा [1]भवेद्द्राविडसंज्ञगौडः [2] [3]पांशोऽप्यसौ सालक(ग)एव लोके ॥१९५॥
॥ इति द्राविडगौडः[4] ॥७॥

[5]धस्थायिनो [6]द्रागवरुह्य पूर्वां ग्रहाधरं प्रोच्य[7] ग्रहं तथोक्त्वा ।
तृतीयतुर्यौ च विलम्ब्य तस्मादधस्तनौ प्रोच्य विलम्बयेच्च[8] ॥१९६॥

स्पृष्ट्वा धरा(ग्रहा)च्चैव परं च [9]पूर्वां पूर्वं तथोक्त्वा ग्रह एव कम्पिते ।
न्यसेद्यदा स्याल्ललिताभिधस्तदा गस्थायिनं केचिदमुं वदन्ति ॥१९७॥
॥ इति ललितः ॥८॥[10]

॥ इत्युपाङ्गानि ॥

रागाङ्गतायामपि केचनास्य रागत्वमाहुर्मतमत्र[11] तेषाम् ।
[12]आलम्ब्य पार्थक्यमुपेत्य[13] गीतो न मे तथा संमतिमातनोति ॥१९८॥

एवं मया केचन [14]मुग्धबुद्धिप्रवृत्तये[15] यन्त्रगताः प्रदिष्टाः ।
ते सर्वयन्त्रेषु समानबुद्ध्या रागा बुधैर्वाद्यविधौ विधेयाः ॥१९९॥

स्वबुद्धितः [16]कृष्णनरेश्वरस्य बुद्ध्या[ऽ]थवा वीक्ष्य विशेषजातम् ।
ग्रहादिकानामिह[17] संभवः स्याद्यथा तथा वादनमाददीत ॥२००॥

एवं तते वा सुषिरे स्वरैश्च स्वस्थानजैर्यस्य हि संभवः स्यात् ।
रागस्य तैरेव तदुद्भवोऽत्र [18]राजोपदेशादभिवीक्षणीयः ॥२०१॥

किन्नरीवादकान् प्रायो(प्रत्यु)पदिश्य स्वमनीषया ।
यत्शा(यच्छा)र्ङ्गदेवेनापाद्य [19]चोद्यमत्रोपदर्शितम् ॥२०२॥

खण्ढ(ण्ड)कर्तृकसंभो(यो)गसमत्वादफलं हि तत् ।
तथा हि तेषामज्ञानमाविः[20](विष्)कुर्वन् यदादिशत् ॥२०३॥

[1] D. भवे E. भवे ईवितड०
[2] D. ०गौडो E. ०गौडो
[3] E. पांप्यसौ
[4] A. D. E. read इत्युपाङ्गानि after द्राविडगौडः; in fact this should go at the end of ललित which follows next.
[5] A. धा D. E. धाक्
[6] A. द्रागा०। ०नः प्रागवरुह्य can also be a possible reading.
[7] E. प्रोच
[8] E. ०येत्
[9] A. पूर्यो
[10] A. D. E. ॥१॥
[11] E. ०मंत्र
[12] E. आलब्य
[13] D. ०मुपेत
[14] E. मुग्धु
[15] A. ०प्रवृद्धये
[16] D. E. ०कुम्भ०
[17] A. ०मिव
[18] E. राजौ०
[19] E. omits चोद्य०
[20] E. omits विसर्ग



रागेषु केषुचित् स्थायिद्वैविध्यं तन्न सुन्दरम् ।
यदवोचद् ग्रहान्यत्वं [1]रागगं लोकशास्त्रयोः ॥२०४॥

न तद्विचारचारुत्वमारोहति[2] कदाचन ।
यथार्थशासना[च्]छास्त्रमिति शास्त्रस्य लक्षणम् ॥२०५॥

व्याहन्नेता(०न्येत)यथासिद्धग्रहद्वैतानुशासनात् ।
यच्च [3]लक्ष्यप्रधानत्वमस्य शास्त्रस्य दर्शितम् ॥२०६॥

द्रष्टव्योऽनुभवस्तत्र प्रत्ययः परवाचिकः ।
आप्तोपदेशमयवा प्रमाणं [4]मनुषे ततः ॥२०७॥

व(य)ददृष्ट[5] (ोऽ) [6]श्रुतो वापि पराप्तानुभवादृते ।
किंचास्मिन् सत्यपरथा शास्त्रं[7] व्याक्रियते त्वया[8] ॥२०८॥

उपलक्षकता[9] योक्ता स्वरस्यान्यस्वरं प्रति ।
सा सती कथमार्सत्ति[10] लभते सग्दिरां [11]पथि ॥२०९॥

उपलक्षकता प्रायः प्रत्यक्षागोचरे भवेत् ।
साक्षात् प्रतीयमानेऽर्थे कथमत्रोपलक्षणम् ॥२१०॥

यदाह नियमादृष्टकल्पनं तदसद्यतः[12] ।
न दृष्टे सत्यदृष्टस्य कल्पनं [13]न्याय्यमिष्यते ॥२११॥

यतो दृष्टार्थवाक्यानां[14] प्रामाण्यमनुमाय च ।
अदृष्टार्थस्य वाक्यस्य प्रामाण्यमनुमीयते ॥२१२॥

इदं दृष्टप्रधानं हि शास्त्रमेतद् बलेन हि ।
अग्निष्टोमादिवाक्यानां प्रामाण्यमुररीकृतम् ॥२१३॥

अतो यस्मिन् ग्रहो रागे यः शास्त्रादुपलभ्यते ।
तत्साहचर्यादंशत्वं तस्यैवेति समञ्जसम् ॥२१४॥

अधस्तनानां या चिन्ता सा [15]कृतान्तवशे गता ।
यदभ्यधायि तेनात्र समाधानं विपश्चिता ॥२१५॥

[1] A. रागांगं
[2] E. ०हंति
[3] A. लक्षण०
[4] E. ०ण मानुष
[5] D. E. ० दृष्टः
[6] A. ०स्तुतो
[7] E. omits अनुस्वार
[8] E. त्ववा
[9] E. ० तावयोक्ता
[10] A. ०सत्यं
[11] A. यतिः
[12] E. ०द्यताः
[13] A. न्याय०
[14] A. ० नं
[15] E कृतां वशे

तत्तदाधान एवास्य गलितं न प्ररोहति ।
अत एवाजनेरेषां तुर्यादीनां[१] न संकथा ॥२१६॥

आनर्थक्यं च यत् शास्त्रे (यच्छास्त्रे) षड्जाद्युक्तेः[२] प्रसंजितम् (प्रसज्जितम्) ।
पराहतं तदेवात्र ग्रहान्यत्वपराहतेः[3] ॥२१७॥

यद्[४] ग्रहापेक्षया तुर्यादयस्तेन निवेदिताः ।
नियतास्तद्भ्रमेणापि सत्या धीरुदयं गताः ॥२१८॥

लोकेऽपि दृश्यते क्वापि भ्रान्तिः[५] [६]सत्यावलम्बिनी ।
यदभाणि ग्रहांशादिनियमः [७]शास्त्रगोचरः ॥२१९॥

लक्ष्यस्योऽन्यस्वराद्गुम्फो[८] नान्यथात्वमिहार्हति ।
त एव तत्र प्रष्टव्या बृहद्देशीविदांवराः[९] ॥२२०॥

ग्रहादिषट्स्वरेभ्योऽन्ये नियतेभ्यः परे [१०]स्वराः ।
केचित् कैश्चित्[११] क्वचिद् दृष्टाः स्वेच्छया[१२] परिकल्पिताः ॥२२१॥

तत्संवाद्यादिकेभ्योऽन्ये ये[१३] क्रियन्ते परेऽन्यथा ।
तस्मान्महानुभावानामेषामेषा परा स्थितिः ॥२२२॥

लीलायितस्य सा [१४]नैवास्मदादीनामिहास्पदम् ।
विचारस्य ततोऽस्माकं गुरुभ्यस्तु[१५] नमः सदा ॥२२३॥

तस्माद्यत्स्थायिनो द्वैधं[१६] मया सन्मार्गवर्तिना ।
दर्शितं[१७] वस्तुतो नैव तन्मन्तव्यं विपश्चिता ॥२२४॥

आलोड्य सर्वशास्त्राणि [१८]कालसेनेन धीमता ।
कीर्तिता किन्नरी वीणा किन्नरीगीतकीर्तिना ॥२२५॥

इति [१९]श्रीजगदीशवनदेवनिजगणेन जगदीश्वरीकामेश्वरीचरणकिंकरेण श्रीकामाक्षागिरिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धित-

[१] A change in the script of E. is noticeable from here. (Folio No. 35 A which starts with ०नां)

[२] A. ० दुक्तः

[3] E. omits विसर्ग and adds रेफ on य in the next line.

[४] A. यत् [५] A. omits विसर्ग [६] E. स्यात्या० [७] D. E. शस्त्र

[८] D. ०स्वरोद्गुंफो E. स्वरोद्गुफो [९] D. E. ०विशांवराः

[१०] D. E. श्वराः [११] A. omits कैश्चित् [१२] E. स्वेच्छयाः

[१३] A. यो [१४] A. ०स्मादादीनां [१५] E. गुरुभ्यो [१६] D. E. द्वेषं

[१७] E. omits अनुस्वार [१८] D. कुम्भकर्णेन [१९] E. omits श्री



यशोभरेण, वाटिकाचलग्रहणजनितकीर्त्तिपूरपराजिताचलनायकेन संगमनीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण वमनपुरविध्वंसनबंदीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकंभरीरमणपरिशीलनपरिप्राप्तशाकंभरीपरितोषितशाकंभरीप्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरिवारितांजनाद्रिविजयविख्यातवीर्यगर्वेण महदंबमातृकापुरोद्धूलनर्धाषितमहोरगपुरेण श्रीवनदेवस्वामि-[१]प्रासादरचनापरपरमेश्वरेण [२]त्र्यंबकेश्वरसन्निधिकीर्त्तिस्तम्भोन्नतजयस्तम्भेन [3]श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्रीकामाक्षागिरिनवीननिर्मितिपराजितसुमेरुणा श्रीमहिषाचलोपरिश्रीहरिशरणरचित।चलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसंध्यक्षेत्रसमुद्रसम्भवरोहिणीरमणेन परमभागवतेन महाराजाधिराजराजश्रीराजमानमृगांकतामराजेन्द्रनन्दनेन महाराज्ञीसौभाग्यवतीश्रीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवतीलघुमादेवीहृदयाधिनाथेन राजाधिराजश्रीकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे ततोल्लासे किन्नरीपरीक्षणं चतुर्थं समाप्तम् । उल्लासश्च प्रथमः समाप्तः ।[४]

---

D. reads the colophon as follows—

इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथमंथमहीधरेण योगिनीप्रसादासादितयोगिनीपुरेण मण्डलदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण अजयमेरुजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनर्धाषितनागपुरेण अर्बुदाचलग्रहणसंदर्शिताचलाद्भुतप्रतापेण गूर्जराधी[श]ध (धी) रत्वोन्मूलनप्रचण्डपवनेन श्रीमत्कुम्भलमेरुनवीननिर्मितपराजितसुमेरुणा श्रीचित्रकूटभौमस्वर्गतायथार्थीकरणरचितचारुपथेन मेदपाटसमुद्रसम्भवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदवदहनदवानलेन प्रत्यर्थिपृथिवीपतितिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेश्वरेण गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुरानने[न]याचककल्पनाकल्पद्रुमेण वसुंधरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिंकरेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन राजगुर्वादिविरुदावलीविराजमानेन राजाधिराजश्रीमोकलेन्द्रनन्दनेन राजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे ततोल्लासे किन्नरीपरीक्षणं चतुर्थं समाप्तम् ।

ततोल्लासः समाप्तः ।

---

[१] A. प्रसाद

[२] A. E. त्रियंबकेश्वर [3] E. omits श्री ।

[४] It may be noticed here that the border lines of the margin are drawn in red ink in 'E' from folio No. 35–A, where a change in handwriting has already been noticed. (p. 64 ante)

# द्वितीयः सुषिरोल्लासः

## वंशनिरूपणं नाम प्रथमं परीक्षणम्

[1]भुवनानीह चतुर्दश गतबाधं [2]वसन्ति यस्य हृत्सुषिरे ।
तमसुषिरक्रियमीशं वन्दे वेणुप्रियं नृहरिम् ॥१॥

नानामुनिजनवचनैरतिविमतिमितं मतङ्गमतविज्ञः ।
तनुते वंशविचारं सुवंशभूमीभृतामीशः ॥२॥

वंशः पावः पाविकाथो मुरली मधुकर्यथ ।
काहला-तुण्डिकान्यौ (तुण्डुकिन्यौ) च [3]भुक्का भृङ्गमतः परम्* ॥३॥

शङ्खादयश्च सुषिरवाद्यभेदाः समीरिताः ।
मनुश्च विश्वमूर्तिश्च तथादित्याह्वयः परः ॥४॥

रुद्राख्यश्च महानन्दो[4] नाथेन्द्रो वसुसंज्ञकः ।
मुनिः षडाननः पञ्चवक्त्रश्चैव [5]चतुर्मुखः ॥५॥

द्वादशः स्यात् त्रिपुरुष[6] उमानाथस्त्रयोदशः[7] ।
चतुर्दशस्त्वेकवीरसंज्ञको वंश इष्यते ॥६॥

विकल्पकल्पना-[8]जल्पमवधूयाभिधीयते ।
एषां लक्षणसंदर्भसारोद्धारो मयाखिलः ॥७॥

†वैणवः खादिरो वा स्याद्रक्तचन्दनजोऽथवा ।
[9]चान्दनो गजदन्तेन निर्मितो वा तथाहि सः ॥८॥

कांस्यजो वा भवेद्रौप्यः सुवर्णेनाथ निर्मितः ।
अग्रन्थिरव्रणः श्लक्ष्णो निर्भेदः सरलः समः ॥९॥

सुवृत्तः सुषिरं गर्भे कनिष्ठामूलसंमितम् ।
स्वदैर्घ्यमानदैर्घ्यं च[10] समाकृति समन्ततः ॥१०॥

[1] A. E. भवानीह [2] A. E. सन्ति [3] S. R. चुक्का
* cf. S. R. VI 11, 12 [4] A. E. ०नन्नो [5] A. चतुर्भुजः
[6] A. adds विसर्ग [7] E. ०शा [8] D. जाल०
† cf. S. R. VI 424-26 for 8-10 above.
[9] A. E. चन्दनो [10] A. omits च



नवरन्ध्रोपरां (रन्ध्रपरं) पृष्ठे बदरीबीजसन्निभम् ।
दधानो जायते वंशः पिण्डः सार्धयवोऽस्य च ॥११॥

सामान्यलक्षणं त्वेतद् विशेषो[ऽ][1]थाभिधीयते ।
[2]लिक्षाष्टकमिता यूका यवो यूकाष्टको मतः ॥१२॥

[3]तिर्यग्यवोदरैः षड्भिर्निस्तुषैः स्यादिहाङ्गुलम्* ।
अनेनाङ्गुलमानेन[4] वंशनिर्माणमिष्यते ॥१३॥

अङ्गुलैः स्याच्चतुश्चत्वारिंशतात्र सयूकया ।
[5]लिक्षाद्वयेनाधिकया मनुदण्डप्रमाणतः ॥१४॥

[6]शीर्षप्रदेशतस्त्यक्त्वा[7] सार्धमङ्गुलकद्वयम्[8] ।
एकाङ्गुलं वक्त्ररन्ध्रं भवेज्जातिमुखाभिधम् ॥१५॥

मुखरन्ध्रात्ताररन्ध्रमङ्गुलानि चतुर्दश ।
परित्यज्य भवेत्[9] सार्धं[10] यवत्रितयसंमितम् ॥१६॥

सप्तात्र स्वररन्ध्राणि ताररन्ध्रमितानि च ।
कर्तव्यानि तदन्यानि तेषामप्यन्तरं भवेत् ॥१७॥

अङ्गुलत्रितयं पादन्यूनं [11]षड्लिक्षिकाधिकम् ।
प्रत्येकं मिलितं तच्च सप्तानामन्तरालगम् ॥१८॥

[12]लिक्षाद्वयं यवयुगं [13]यूकिकैकाङ्गुलानि च ।
[14]एकोना विंशतिर्मानं तथा रन्ध्राष्टकस्य तु ॥१९॥

अङ्गुलानि तु चत्वारि तथा यवचतुष्टयम् ।
वंशस्य प्रान्तभागे तु [15]सार्धमङ्गुलकद्वयम् ॥२०॥

[1] D. ०थो[ऽ]भि० [2] A. E. लिख्या०
[3] A. E. तीर्यंग् * cf. S. R. VI 526. [4] E. ०गुलि०
[5] A. लिख्या० [6] cf. S. R. VI 427.
[7] E. resumes the usual handwriting from folio No. 37 A. which starts with क्त्वा सार्ध० etc. The full text of this verse is found at the end of the preceding folio in the changed handwriting.
[8] E. ०वद्वयम् in the resumed hand.
[9] E. भवित् [10] D. E. omit अनुस्वार A. ०लिख्यका०
[12] A. लिख्या० [13] A. युकिकांगुलानि E. यूगिकैकागुलानि
[14] E. ऐकोना [15] E साद्धं

अवशिष्टं भवेन्मानं मनुवंशे समासतः ।
अयं सर्वेषु वंशेषु परमः परिकीर्तितः ॥२१॥

त्रिस्थानस्वरसंभूति[१]-साधकत्वात् पुरातनैः[२] ।
वर्णालंकृतिधात्वादिमूर्छनाद्यमनेकधा[३] ॥२२॥

वदन्ति वाद्यमेतस्मिन् वाद्यतत्त्वविशारदाः[४] ।
[५]तारा(र)स्य रन्ध्रयोरन्तस्त्यक्त्वैकैकाङ्गुलं बुधाः ॥
कुर्वन्ति सदृशाकारान् वंशानन्यांस्त्रयोदश ॥२३॥
॥ इति मनुवंशलक्षणम् ॥१॥

यूकाभिः पञ्चभिर्युक्तं स्यात् सप्तत्रिंशदङ्गुलम् ।
[६]विश्वमूर्तौ [७]दण्डमानं [८]तस्मिंस्त्यक्त्वा[ऽ]ङ्गुलद्वयम्[९] ॥२४॥

शिरोदेशे जातिवक्त्रं विदधीत विधानवित्[१०] ।
अन्तरालस्य मानं स्याद् वक्त्रताराख्यरन्ध्रयोः[११] ॥२५॥

त्रिभिरभ्यधिकैर्मेयमङ्गुलैर्दशभिस्तथा ।
मनुदण्डवदत्रापि [१२]रन्ध्राष्टकमितिर्मता ॥२६॥

अङ्गुलद्वितयं यूकाद्वयेनाभ्यधिकं भवेत् ।
रन्ध्राणामन्तरालस्य प्रत्येकं प्रमितिस्ततः ॥२७॥

पञ्चयूका यवद्वन्द्वमङ्गुलानि चतुर्दश ।
प्रमाणं परिविज्ञेयं [१३]संभूयान्तरसप्तके ॥
प्रान्तोऽङ्गुलद्वयी चास्य वंशविद्भिरुदाहृतः[१४] ॥२८॥
॥ इति विश्वमूर्तिः ॥२॥

जातिवक्त्रशिरःप्रान्ता आदित्यादेः समासतः ।
[१५]एकवीरावधिर्ज्ञेया[१६] वंशानां विश्वमूर्तिवत्[१७] ॥२९॥

---

[१] D. ०संभूते० E. संभूतो०
[२] E. ०नि: [३] A. मूर्छनात्व० [४] E. omits विसर्ग
[५] cf. S. R. VI 433-36 and 466-99 for 23-65 of our text dealing with the 'Māna' of the 14 types of 'Vaṁśa'.
[६] E. विश्वा० [७] E. दण्डा० [८] A. D. E. तस्मिन् त्यक्त्वा
[९] D. E. ०द्विकम् [१०] D. ०वत् [११] E. omits विसर्ग
[१२] A. रन्ध्राष्ट० (omits क)
[१३] E. संभ्रूयांतर० [१४] E. ०ता: [१५] E. एव
[१६] D. E. ज्ञेया [१७] D. ०मत् E. ०मान्



[१]लिक्षाद्वितयसंयुक्त-सपादयवसंयुतैः ।
मानमादित्यवंशस्य स्याच्चतुस्त्रिंशदङ्गुलैः[२] ॥३०॥

मुखरन्ध्रस्य ताराख्य-रन्ध्रस्य च विदांवरैः ।
मध्यमानमपि ज्ञेयं द्विगुणैः षड्भिरङ्गुलैः ॥३१॥

विशिष्टमङ्गुलं ज्ञेयं पादोनैः पञ्चभिर्यवैः ।
प्रत्येकमत्र रन्ध्राणामष्टानां [३]मानकल्पनम् ॥३२॥

लिक्षाद्वयं तथा षट्कं [४]यूकानां यवयुग्मकम् ।
[५]द्वादशैवाङ्गुलान्येवं[६] मानमन्तरसप्तके[७] ॥३३॥
॥ इत्यादित्यवंशः[८] ॥३॥

रुद्रवंशस्य दण्डोऽत्र सयवैस्त्रिंशदङ्गुलैः[९] ।
रुद्राङ्गुलैर्मितं मध्यं[१०] ताररन्ध्रस्य[११] रन्ध्रयोः ॥३४॥

सार्धाङ्गुलं पृथक्(ङ्)मानं रन्ध्रसप्तान्तरालगम् ।
[१२]दशाङ्गुलं सत्रियवं संभूयान्तरतो[१३] मितिः ॥
आदित्य-[१४]लक्षणाख्यातं शेषं [१५]लक्षणमस्य तु ॥३५॥
॥ इति रुद्रवंशः ॥४॥

महानन्दाभिधं वंशे दण्डमानमुदीरितम् ।
सार्धयूकाधिकैरत्राष्टाविंशत्यङ्गुलैस्तथा ॥३६॥

मध्यं दशाङ्गुलं ज्ञेयं मुखताराख्यारन्ध्रयोः ।
सपादत्रियवी[१६] ताराद्यष्टरन्ध्रमिति[:]पृथक् ॥३७॥

सप्तरन्ध्रान्तरालेषु सपादाङ्गुलकं पृथक् ।
सयूकात्रितयं रन्ध्राष्टके सामस्त्ययोगतः ॥
सयवद्वितयं मानं [१७]चतुरङ्गुलसंमतम् ॥३८॥

नवाङ्गुलं सैकयवं सैकयूकमुदीरितम् ॥
समस्तान्तरगं मानं शेषं स्याद्रुद्रवंशवत् ॥३९॥
॥ इति महानन्दवंशः ॥५॥

---

[१] A. लिख्या [२] A. D. E. ०शताङ्गुलैः [३] A. मात्र०
[४] E. omits यूकानां यव० [५] A. द्वादशे [६] E. ०न्यैवं [७] E. ०कै
[८] D. E. ०दण्ड: [९] D. E. ०स्त्रिभिरंगुलैः [१०] E. omits अनुस्वार
[११] D. E. ०रन्ध्रास्य [१२] E. दशागुलं [१३] E. ०रेतो
[१४] D. E. look like लक्ष्मणा० [१५] E. लक्षणं सुमस्य [१६] A. ० यवा
[१७] D. E. शेषं स्याद्रुद्रवंशवत् i. e. the fourth foot of verse 39 is reproduced at the end of verse 38; thus the sixth foot of 38 and the first three feet of 39 are omitted.

नायेन्द्रवंशो[१] विंशत्या [२]युतया षड्भिरङ्गुलैः ।
सयवैर्द्वितयेनाथ यूकाया [३]अन्वितैर्भवेत् ॥४०॥

मध्यं नवाङ्गुलं तस्य रन्ध्रयोर्मुखतारयोः ।
संभूयान्तरमानं च तथानुक्तमपीह यत्[४] ॥
महानन्दस्य वंशस्य निर्माणात्तद्गतार्थकम् ॥४१॥

॥ इति नायेन्द्रवंशः[५] ॥६॥

वसौ[६] वंशे दण्डमानं अङ्गुलानामुदीरितम् ।
त्र्युत्तराविंशतिः[७] पञ्च यवा यूकात्रयं तथा ॥४२॥

अन्तरं मुखताराख्यरन्ध्रयोर्दिग्गजाङ्गुलम् ।
संभूयान्तरसप्तानां मानमत्र भवेदिदम् ॥४३॥

पञ्चाङ्गुलानि [८]सार्धाष्टयवयुक्सप्तयूकिकम्[९] ।
प्रतिस्वमन्तरं ज्ञेयमङ्गुलं पादवर्जितम्[१०] ॥
सयूकानवकं, शेषं नायेन्द्रवदिह स्मृतम् ॥४४॥

॥ इति वसुवंशलक्षणम् ॥७॥

[११]मुनौ वंशे दण्डमानमङ्गुलान्येकविंशतिः ।
सार्धानि यूकिकाश्चाष्ट लिक्षाषट्कोनिताः पुनः ॥४५॥

सप्ताङ्गुलो मध्यदेशो मुखताराख्यरन्ध्रयोः ।
रन्ध्राष्टकान्तरं ज्ञेयं पृथगर्धाङ्गुलोन्मितम् ॥४६॥

एकवीरावधिप्रोक्तमूर्ध्ववंशेषु सप्तसु ।
लिक्षाश्चतस्रः सार्धा[:]स्युर्यूकाषट्केन संयुताः ॥४७॥

सप्तान्तरालगं मानमुक्तं यवचतुष्टयी ।
सार्धसप्तकलिक्षा [१२]च यूकानामपि पञ्चकम् ॥४८॥

पञ्चाङ्गुलानि त्रियवी मानमेतत् समासतः ।
प्रमाणं मुखरन्ध्रस्य [१३]शिरःप्रान्तस्य च [१४]स्मृतम् ॥
वसुवंशवदत्रापि मुनावपि मुनेर्मतात् ॥४९॥

॥ इति मुनिवंशलक्षणम् ॥८॥

[१] A. ०वंशे [२] A. श्रुतया [३] A. अन्वतै०
[४] A. महीपयन् [५] D. E. नाथेन्द्रः [६] D. E. वसो
[७] D. E. omit विसर्ग
[८] E. सार्धाष्टु युव० [९] D. E. ०काम् [१०] E. वर्जित
[११] A. मुनौवंशे [१२] A. वत् [१३] A. शिरप्रान्तस्य





यूकात्रयं यवश्चैकोऽङ्गुलान्येकोनविंशतिः ।
षण्मुखाख्यस्य वंशस्य दण्डमानमिहेष्यते[१] ॥५०॥

षडङ्गुलो मध्यदेशो मुखताराख्यरन्ध्रयोः ।
सप्तकान्तरमानं तु प्रत्येकं पुनरीरितम्[२] ॥५१॥

त्रियवी पञ्चभिर्युक्ता यूकाभिर्मानवेदिना ।
[३]समासतोऽन्तरालस्य मानमेको[४] यवस्तथा ॥५२॥

[५]यूकात्रितयसंयुक्ताङ्गुलानां स्याच्चतुष्टयी ।
लक्ष्मशेषं विजानीयान्मुनिदण्डवदस्य तु ॥५३॥

॥ इति षण्मुखवंशः ॥९॥

सपादद्वियवोपेतैरङ्गुलैर्दशभिः स्मृतम् ।
सप्ताधिकैः[६] पञ्चवक्त्रवंशमानं महीभृता ॥५४॥

पञ्चाङ्गुलं च विवरं मुखताराख्यरन्ध्रयोः ।
रन्ध्राष्टकं पुनर्ज्ञेयं पृथगर्धाङ्गुलोन्मितम् ॥५५॥

सप्तकान्तरमानं तु [७]पादोनत्रियवी पृथक् ।
समासतः सपादैकयवमङ्गुलकत्रयम् ॥
मानं षण्मुखदण्डेन लक्ष्मशेषमिहेरितम् ॥५६॥

॥ इति पञ्चवक्त्रः ॥१०॥

चतुर्मुखस्य वंशस्य मानं षट्(ड्) [८]यूकिकाधिकैः ।
अङ्गुलैः पञ्चदशभिर्मुखताराख्यरन्ध्रयोः ॥५७॥

अन्तरे मानमाख्यातमङ्गुलानां चतुष्टयम् ।
पृथक् सपादा[९] द्वियवी मानं सप्तान्तरालगम् ॥५८॥

समासतो मध्यमानमङ्गुलद्वितयी तथा ।
यूकाः षट् [१०]त्रियवी शेषं पञ्चवक्त्रवदीरितम् ॥५९॥

॥ इति चतुर्मुखः ॥११॥

वंशे त्रिपुरुषे दण्डो यवद्वितयसंयुतैः[११] ।
चतुर्दशाङ्गुलैर्मध्यं[१२] त्र्यङ्गुलं द्वियवाधिकम् ॥६०॥

[१] E. ०ष्यते [२] E. ०रीरिती
[३] D. E. समातीतो० [४] A. ०मेका D. E. मेकौ [५] A. यूकां
[६] E. ०धैकैः [७] D. E. पादोना [८] A. युकिका०
[९] E. omits दा [१०] A. त्रियवोपेता (omits शेषं)
[११] D. E. ०संयुते [१२] A. मध्यो[ऽ?]स्यांगुलत्रियवाधिकः

मुखताराख्यरन्ध्रस्थं[१] [२]मानमन्तरसप्तके ।
यवद्वयं समासेनाङ्गुलद्वितयसंयुतम् ॥६१॥

यवद्वयं विजानीयादन्तरालेषु सप्तसु ।
[३]शेषलक्षणमेतस्मिन् चतुर्मुखवदीरितम् ॥६२॥

॥ इति त्रिपुरुषः ॥१२॥

यवद्वयाधिकैर्ज्ञेय[४]-स्त्रयोदशभिरङ्गुलैः ।
उमापतिर्दण्डमानं मुखताराख्यरन्ध्रयोः ॥
मध्यं द्व्यङ्गुलकं लक्ष्म शेषं [५]त्रैपुरुषं मतम् ॥६३॥

॥ इत्युमापतिवंशलक्षणम्[६] ॥१३॥

अङ्गुलैः स्याद् द्वादशभिर्यवद्वितयसंयुतैः ।
एकवीरे दण्डमानं, मुखताराख्यरन्ध्रयोः ॥६४॥

अन्तरं चापि विज्ञेयमेकाङ्गुलकसम्मितम् ।
लक्ष्मोमापतिवंशस्य लक्षणे नोदितं परम् ॥
इत्युक्तमेकवीरेण लक्ष्म वंशैकवीरगम् ॥६५॥

॥ इत्येकवीरवंशलक्षणम ॥१४॥

[७]केचिदन्यानपीच्छन्ति वंशान् [८]पञ्चदशाङ्गुलान् ।*
द्वाविंशत्यङ्गुलं यावदष्टावन्वर्थसंज्ञकान् ॥६६॥

षोडशाङ्गुलकं [९]वंशं कलानिधिमुदाहरन् ।
विंशत्यङ्गुलकं वंशं मुरलीसंज्ञकं [१०]विदुः ॥६७॥

द्वाविंशत्यङ्गुलं वंशं प्राहुः श्रुतिनिधिं बुधाः ।
एषु सर्वेषु वंशेषु मुखताराख्यरन्ध्रयोः ॥६८॥

अन्तराङ्गुलकैर्ज्ञेया संज्ञा[ऽ][११]न्वर्थविदांवरैः ।
त्रयोदशाङ्गुलः[१२] कैश्चिद् वंशः पञ्चदशाङ्गुलः ॥६९॥

नेष्यतेऽल्पान्तरत्वेन तथा सप्तदशाङ्गुलः ।
[१३]अतिमन्द्रध्वनित्वेन [१४]नान्ये तद्विद्भिरादृताः ॥७०॥

---

[१] E. omits अनुस्वार [२] D. E. स्थान० [३] D. E. शेषं
[४] D. E. ०ज्ञेयं त्रयो० [५] A. त्रिपुरुषं E. स्त्रैपुरुषं [६] E. ०ण:
[७] E. कैंचिद०
[८] A. पंचदशान् गुणान् E. वंशानं पदं शागुलान् * cf S. R. VI 436-40 for 66-71 above.
[९] D. E. तेषु [१०] D. E. जगु: [११] A. E. ०न्वर्था D. ०न्वय
[१२] D. E. omit विसर्गं [१३] E. अभि० [१४] A. मान्ये



अतितारध्वनित्वेन वंशाः पञ्चाङ्गुलादधः[१] ।
कैश्चिदभ्युपगम्यन्ते सुष्ठुशारीरशालिभिः ॥७१॥

*एवं वशा [२]नवैवेति केषांचन मते मताः ।
एकादशापरेऽप्याहुः पञ्चवक्त्रचतुर्मुखौ[३] ॥७२॥

प्रक्षिप्य तेषु केऽप्यन्ये नानास्वररुचितो जगुः ।
†सर्वेष्वेतेषु पक्षेषु त्रिस्थानस्वरसाधकः ॥७३॥

चतुर्दशाङ्गुलो वंशः सर्ववंशेषु शस्यते ।
द्वादशाङ्गुलकोऽप्यस्ति लोकेऽभीष्टस्वराकरः[४] ॥७४॥

‡स्थानत्रयस्य निष्पत्त्यै [५]केचित् कीर्तिधरादयः ।
नवैवात्र जगुर्वंशान् [६]व्यवस्था[ऽ]तस्तथोच्यते ॥७५॥

आदित्यो विश्वमूर्तिश्च मन्द्रस्वरविधायकौ ।
नायेन्द्रश्च महानन्दो रुद्रवंश इति त्रयः ॥७६॥

मध्यस्वरविधातारस्तथा तारविधायकाः ।
षण्मुखो मुनिवंशश्च वसुवंश इति त्रयः ॥७७॥

सर्ववंशमयत्वेन [७]त्रिस्थानस्वरसाधकाः[८] ।
वर्णालंकारधात्वादिवाद्यसंवेदनत्वतः[९] ॥७८॥

नवमो मनुवंशश्च तन्मते प्रवरो मतः ।
एवं वंशा [१०]नवैवेति व्यवस्था[ऽ]तः प्रकीर्तिता ॥७९॥

*अत्र सर्वेषु वंशेषु पिण्डः सार्धयवो मतः ।
स्वरभङ्गभयादत्र खानिरन्ध्रे यथाविधि[११] ॥८०॥

कर्तव्यो, मानहीनत्वे [१२]मिलितोनस्वरान्तरैः[१३] ।
यतः कनीयसी मध्यपर्वमूलेन संमिता ॥
खानि[ः]स्यात् सर्ववंशेषु राजराजस्य संमता ॥८१॥

---

[१] E. ०दय: * cf. S. R. VI 464 [२] E. नेवैवेति
[३] E. ०खो † cf. S. R. VI 462. 63 for 73-74 above.
[४] D. E. स्वराधिक: ‡ cf. S. R. VI 460-63 for 75-79 above.
[५] A. कैंचित् [६] A. यवस्था
[७] E. looks like पिस्थान० [८] D. E. ०क:
[९] E. ० ता: [१०] E. नेवैवेति * cf. S. R. VI 606
[११] A. adds विसर्ग [१२] A. मिलतो न न [१३] E. ०रांतोरे

अल्पान्तरत्व-[1]मुल्लिख्य येन वंशास्त्रयोदश ।
निषिद्धः स तु जानाति तन्निषेधफलं बुधः ॥८२॥

यतोऽस्त्यन्तरमत्रापि तुल्यं वंशान्तरान्तरैः ।
एवं चतुर्दशैवैते[2] वंशाः प्रोक्ता महीभृता ॥८३॥

रक्तिमाधुर्यधुर्यत्वे[3] रागाभिव्यक्तिहेतवः ।
एकादश परं तेषु व्यवहारपथं [4]श्रिताः ॥८४॥

इति वंशाः सुवंशेन [5]श्रीकृष्णेन विवेकिना ।
चतुर्दशसु विद्यासु चतुर्दश निरूपिताः ॥८५॥

इति श्रीराजाधिराज-[6]महीमहेन्द्रराज-[7]श्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे सुषिरोल्लासे [8]वंशनिरूपणपरीक्षणं प्रथमं समाप्तम् ।

---

[1] D. E. omit मु [2] A. ० वेते [3] E. त्वै
[4] A. स्मृताः [5] D. E. श्रीकुम्भेन
[6] D. E. omit महीमहेन्द्रराज० [7] D. E. श्रीकुम्भकर्ण०
[8] A. वंशपरीक्षणं



‡स्थायिनमृषभं कृत्वा तत्पूर्वं कम्पयेत्ततः[1] ।
तदर्धं प्रोच्य कृत्वाथ[2] ग्रहं[3] तस्माद् द्वितीयकम् ॥९५॥

तृतीयं सद्वितीयं च ग्रहमागत्य च[4] क्रमात् ।
तत्पूर्वं कम्पयित्वार्धमस्य संप्रोच्य[5] चेद् ग्रहे ॥९६॥

न्यासः[6] क्रियेत गुर्जर्याः स्वस्थानं प्रथमं भवेत् ।
वांशिकैः पुनरस्यास्तु तृतीयः क्रियते ग्रहः ॥९७॥
॥ इति गूर्जरी ॥८॥

*गान्धारं[7] स्थायिनं कृत्वा तद्द्वितीयं तृतीयकम् ।
प्रोच्य तुर्ये विलम्ब्याथ प्राञ्चं कृत्वा पुनः[8] स्पृशेत् ॥९८॥

द्वितीयं दीर्घतां नीत्वा तृतीयं पुनरुच्चरेत् ।
द्वितीये[9] चेद् ग्रहे[10] न्यासस्तदा[11] स्वस्थानमादिमम् ॥
देशाख्या [12]जायतेऽन्यत्तु पूर्ववत् संप्रधारयेत् ॥९९॥
॥ इति देशाख्या ॥९॥

†द्विगुणं[13] षड्जमास्थाय स्थायिनं वादयेत्ततः ।
तदर्धं च ततः पूर्वं ग्रहं चैव द्वितीयकम् ॥१००॥

तृतीयं सद्वितीयं च स्थायिनि[14] न्यस्यते यदा ।
तदा वराट्याः स्वस्थानं [15] [16]जायते प्रथमाभिधम् ॥
लक्ष्मवर्त्मनि वंशे स्यात्(द्)द्वितीयो लक्ष्यते स्वरः[17] ॥१०१॥
॥ इति वराटी ॥१०॥

§मध्यमं[18] ग्रहतां[19] नीत्वा प्राञ्चमुक्त्वा ग्रहं पुनः ।
सद्वितीयं कम्पयित्वा तृतीयं सचतुर्थकम् ॥१०२॥

---

‡ cf. S. R. VI 703-04 for 95-97 above.
[1] E. omits विसर्ग [2] D. कृत्वा च E. कृत्वा
[3] E. omits अनुस्वार [4] E. क [5] A. सप्रोच्यते
[6] E. न्यास्यः
* cf. S. R. VI 713-15 for 98, 99 above.
[7] A. omits अनुस्वार [8] A. omits विसर्ग [9] D. ०यं E. ०यां
[10] A. ग्रह० [11] A. ०तया E. न्यासप्तदा [12] E. ज्यते
† cf. S. R. VI 699-702 for 100-01 above.
[13] E. omits अनुस्वार [14] A. ०नी [15] E. omits अनुस्वार
[16] E. जीयते [17] D. E. ततः
§ cf. S. R. VI 691-94 for 102-04 above.
[18], [19] D. E. omit अनुस्वार

लघूच्चार्य तृतीयं चोच्चार्याहत्य[1] च तं पुनः ।
तत्पूर्वं स्वरमुच्चार्य स्थायिन्यासेन जायते ॥१०३॥

स्वस्थानं प्रथमं नाम रागे बङ्गालनामनि ।
द्वितीयोऽस्य स्वरो वंशे ग्रहः[2] स्याल्लक्ष(क्ष्य)गोचरः ॥१०४॥

॥ इति बङ्गालः ॥११॥

॥ इति रागाङ्गानि ॥

*धैवतं स्थायिनं कृत्वा[ऽ]वरोहेण स्वरत्रयम् ।
तृतीयादवरुह्याथ विरम्यास्मिन् ग्रहं ततः ॥१०५॥

तत्परग्रहपूर्वांश्च कृत्वा[ऽऽ]हत्य च तं तया ।
[3]ग्रहन्यासाद् भवेदाद्यं स्वस्थानं भैरवीगतम् ॥
तृतीयोऽस्या ग्रहो लोके दृश्यते [4]लक्ष्यवर्त्मनि ॥१०६॥

॥ इति भैरवी ॥१॥

†आस्थाय द्विगुणं षड्जं स्थायिनं [5]तदधस्तनम् ।
स्वरं तृतीयं संप्रोच्य प्रकम्प्य तदधस्तनम् ॥१०७॥

विलङ्घ्य स्थायिनं तस्य [6]पाश्चात्यं लघुतां नयेत् ।
द्वि[स्]त्रिर्वा ग्रहमाहत्य लघूकृत्यार्धमस्य च ॥१०८॥

उत्तरार्धात्[7] परं यावदास्पृशेत् स्वरपञ्चकम् ।
ग्रहात् परं विलङ्घ्याथ द्रुतीकृत्य तृतीयकम्[8] ॥१०९॥

स्पृशेत् पञ्चममारम्य [9]दीर्घीकृत्यास्य पश्चिमम् ।
कम्पयित्वा मनाक्(ङ)न्यासात्(द्)ग्रहे स्वस्थानमादिमम् ॥११०॥

छायानट्टाख्यरागस्य परं भैरववन्मतम्[10] ।
तृतीयोऽस्य ग्रहः कैश्चिद् दृष्टो वंशेषु वांशिकैः ॥१११॥

अन्ये तु[11] स्थायिनं कृत्वा पञ्चमं [12]तत्तृतीयकम् ।
कृत्वा निषादं [13]कुर्वन्ति कम्पितं [14]मध्यमस्वरम् ॥११२॥

---

[1] A. adds अनुस्वार [2] A. omits विसर्ग
* cf. S. R. VI 744, 45 for 105-06 above.
[3] A. ०न्यासां D. E. ग्रहन्याद् [4] D. E. लक्ष०
† cf. S. R. VI 746-52 for 107-14 above.
[5] E. तदा० [6] E. पश्चात्यं [7] A. omits त्
[8] E. ०क [9] E. दीघी० [10] E. ०तन्मतम्
[11] A. अन्यषु [12] D. E. च तृतीयकं
[13] D. E. तुर्यं च [14] D. मध्यमं



तदूर्ध्वे तु स्थिरीभूय पुनः पञ्चममध्यमौ ।
द्विःकृत्वा पमगान्धारान् पूर्वार्धमृषभस्य च ॥११३॥

ईषत्स्पृष्ट्वा ततो दीर्घौ रिमौ कृत्वा[1] पुनर्ग्रहे ।
न्यासात् सालगनट्टायाः स्वस्थानं प्रथमं विदुः ॥
[2]केचिच्छालगनट्टेति छायानट्टां प्रचक्षते ॥११४॥

॥ इति छायानट्टा ॥२॥

*धैवतं स्थायिनं कृत्वा सकृदाहत्य तत्परम् ।
ग्रहात् परौ[3] द्विरुच्चार्य ग्रहमाहत्य पूर्ववत् ॥११५॥

क्रमाद् द्वितीयमाहत्य ग्रहन्यासेन जायते ।
मल्हारे[4] प्रथमं नाम स्वस्थानं रागवल्लभम् ॥
द्वितीयोऽपि स्वरो वंशे ग्रहत्वेनास्य दृश्यते ॥११६॥

॥ इति मल्हारः ॥३॥

आस्थाय द्विगुणं षड्जं ग्रहं कृत्वा ततो द्रुतम् ।
[5]आन्दोलितद्वितीयं वा[6] वादयित्वा तृतीयकम् ॥११७॥

स्फुरितं ग्रहतत्पूर्वौ विधायाथ ग्रहे यदा ।
न्यासः कर्णाटगौडस्य स्वस्थानं प्रथमं तदा ॥
तृतीयोऽस्य स्वरो वंशे ग्रहत्वे गृह्यते जनैः ॥११८॥

॥ इति कर्णाटगौडः ॥४॥

ग्रहं तमेव सं कृत्वा [ऽऽ] हत्य[7] तुर्यतृतीयकौ[8] ।
स्थाय्युत्तरार्धमाहत्य ग्रहात् पूर्वमुपेत्य च ॥११९॥

[9]स्थायिन्यासाद्देशवालगौडे[10] स्वस्थानमादिमम् ।
वंशेषु[11] दृश्यते रागे[12] द्वितीयोऽस्मिन् स्वरो ग्रहः ॥१२०॥

॥ इति देशवालगौडः ॥५॥

निषादं स्थायिनं कृत्वा पूर्वं ग्रहमयोत्तरम् ।
तुर्यं द्वितीयतस्तु [13]त्रीनवरुह्य स्वरान् ग्रहे ॥१२१॥

न्यासे तुरुष्कगौडस्य स्वस्थानं प्रथमं भवेत् ।
लोके मालवगौडोऽसौ[14] तृतीयोऽस्य[15] ग्रहः स्वरः ॥१२२॥

॥ इति [16]तौरुष्कगौडः ॥६॥

---

[1] A. कृत्या [2] A. केचि छालग० D. केचित् शालग० E. केचित् शालनं
* cf. S. R. VI 761-69 for 115-24 above. [3] A. परो
[4] A. ०र [5] D. E. आन्दोलनात् [6] D. E. च
[7] A. प्राहत्य तृतीयकौ [8] E. ०को [9] E. ० न्याणत् [10] A. ० गौड
[11] E. वंशे तु [12] E. रागो [13] A. D. तृन० E. दृन०
[14] A. ० गौडौ० [15] A. तृतीयस्यो [16] D. E. तौरुष्क ०

प्रहरन्निषादादारोहेदाचतुर्थस्वरात्ततः ।
[1]विलङ्घ्य ग्रहपर्यन्तमवरोहेद्[2] यदा तदा ॥१२३॥

भवेद्द्रविडगौडस्य परं स्वस्थानमादिमम्[3] ।
लोके सालगगौडोऽसौ द्वितीयोऽस्य स्वरो[4] ग्रहः ॥१२४॥

॥ इति [5]द्रविडगौड: ॥७॥

॥ इत्युपाङ्गानि ॥

* धैवतं[6] स्थायितां नीत्वा [7]द्विःकृत्वः प्रोच्य तत्परम् ।
लघूकृत्य ग्रहात् [8]पूर्वस्यार्धं प्रोच्य ततः परम् ॥१२५॥

[9]विलम्ब्य कम्पयित्वार्धमर्धमाहत्य तन्मुहुः ।
प्रकम्प्य तस्य [10]पूर्वार्धं [11]दीर्घीकृत्य ग्रहं व्रजेत् ॥१२६॥

अथ ग्रहं तस्य पूर्वं कृत्वार्धप्रेरितावुभौ[12] ।
उक्त्वा तृतीयकं प्रोच्य स्पृशेदथ चतुर्थकम् ॥१२७॥

तृतीयं कम्पयित्वा [ऽ] थ ग्रहं तत्पश्चिमं ग्रहम् ।
त्रीन् स्वरान् मुहुरुच्चार्य कम्पयित्वा तृतीयकम् ॥१२८॥

तदध [:] स्यं [13]विलम्ब्येषत् स्पृष्ट्वाऽथ ग्रहपञ्चमम् ।
ग्रहे [14]चेन्न्यस्यते पूर्वं[15] स्वस्थानं [16]तर्हि जायते ॥
वेलावल्यास्तृतीयोऽपि[17] स्वरो लक्ष्येषु लक्ष्यते ॥१२९॥

॥इति वेलावली ॥१॥

*द्विगुणं षड्जमास्थाय स्थायिनं तत्र चाहतम्[18] ।
तदर्धेन स्थिरीकृत्वा (कृत्य) द्विस्त्रिर्वोच्चारयेच्च तम् ॥१३०॥

द्वितीयं कम्पयित्वा [ऽ]थ तस्मिन्नेव विलम्ब्य च ।
तत्परं द्विश्चतुर्वाथाहत्य कुर्याद् ग्रहं लघुम्[19] ॥१३१॥

[20]दीर्घीकृत्य ग्रहार्धं तु प्राञ्चमुक्त्वा[21] ग्रहे यदा ।

---

[1] A. विलम्ब्य [2] E. ०मवरोहे तं द् [3] E. ० माविमम्
[4] A. स्वरः [5] E. द्रविह० * cf. S. R. VI 718-23 for 125-29 above. [6] E. धिवतं
[7] A. द्विकृत्वः [8] E. पूदूर्वं० [9] D. E. विलङ्घ्य
[10] E. पूर्वोर्घं [11] A. दीर्घ० E. दीघी० [12] A. उभौ
[13] D. E. विलङ्घ्येषत् [14] A. चेन्नश्यते
[15] A. omits अनुस्वार [16] E. ०स्थानं तंह
[17] D.E. तृतीयोऽपि (omit स्)
* cf. S. R. VI 732-34 for 130-32 above.
[18] A. ०चाहति [19] E. लघु [20] E. दीघी० [21] A. ०मुक्ता



न्यस्यते[1] शुद्धनट्टायाः[2] स्वस्थानं स्यात्तदा [ऽऽ] दिमम्[3] ॥
वंशे वंशविदः[4] प्राहुर्ग्रहमस्या द्वितीयकम्[5] ॥१३२॥

॥ इति शुद्धनट्टा ॥२॥

‡तारषड्जं ग्रहं कृत्वा द्विरुक्त्वा[6] च तृतीयकम् ।
[7]द्विःकृत्वोऽथ [8]चतुःकृत्वो ग्रहं स्पृष्ट्वा तदादिमम् ॥१३३॥

प्रोच्य स्थायिनि [9]कम्पे चेन्न्यस्यते स्यात्तदादिमम् ।
स्वस्थानं शुद्धपूर्वाया वराट्या राजभाषितम्[10] ॥
द्वितीयोऽस्याः स्वरो लक्ष्ये लक्ष्यते स्थायिनः पदे ॥१३४॥

॥ इति शुद्धवराटी ॥३॥

†विधाय द्विगुणं षड्जं ग्रहं स्पृष्ट्वाऽथ सप्तमम् ।
तृतीयं प्रोच्य संस्पृश्य ग्रहं [11]तत्परमुच्चरेत् ॥१३५॥

द्विस्त्रिर्वा [ऽऽ] हत्य तत्पूर्वौ(र्वां)विधाय स्फुरितौ ततः[12] ।
प्रकम्पिते ग्रहे न्यासे स्वस्थानं प्रथमं स्मृतम् ॥१३६॥

डोम्बक्रियो ग्रहो लोके वंशे स्याद् ऋषभः स्वरः ।
तस्या[13] नामान्तरं प्राहुर्भूपालीति पृथक् (ग्) जनाः ॥१३७॥

॥ इति [14]डोम्बक्री: ॥४॥

*आडीकामोदिकायाश्च प्रोच्यते वादने विधिः ।
धैवतं स्थायितां नीत्वा तत्तृतीयाच्चतुःस्वरीम्[15] ॥१३८॥

आरोहन्[16] कम्पयेत् [17]पश्चाल्लङ्घयेत्तादधस्तनम् ।
उक्त्वा ग्रहं तद्द्वितीयं कम्पयेच्च ततः परम् ॥१३९॥

---

[1] A. न्यसेत् [2] A. omits विसर्ग [3] E. ०मादिवमम्
[4] A. वंशविदं [5] E. ०क
‡ cf. S. R. VI 730,31 for 133,34 above.
[6] A. ०क्ता [7] D. E. द्विकृत्वोथ
[8] E. चानुः [9] D. कंप्रे E. कंप्रे
[10] E. ०त † cf. S. R. VI 716,17 for 135-37 above.
[11] D.E. त···मु ( D. मुं )च्चरेत् [12] E. ०तो
[13] A. तस्यां [14] D. E. डौब०
* cf. S. R. VI 727-29 for 138-40 above.
[15] A. स्वरी [16] A. ० हं [17] E. omits प

विषाय स्फुरितं [1]न्यस्येत् स्थायिनि[2] स्यात्तदादिमम् ।
आडीकामोदिकायास्तु स्वस्थानं [3]राजशासनात् ॥
द्वितीयोऽस्याः स्वरो लक्ष्ये लक्ष्यते रागवेदिभिः ॥१४०॥

॥ इति आडीकामोदा ॥५॥

†अथ प्रथममञ्जर्याः स्वस्थानं प्रथमं मया ।
पञ्चमं ग्रहतां नीत्वा [ऽऽ] रोहेत् पञ्चस्वरान् क्रमात् ॥१४१॥

पञ्चमं लङ्घयित्वा [ऽ] स्मात् (द्) द्रुतीकुर्यादधस्तनम् ।
तत्पश्चिमं द्रुतीकृत्य[4] द्राघयेत्तात्पुरः[5] स्थितम् ॥१४२॥

[6]दीर्घीकृत्याथ चाग्रस्थमवरुह्य क्रमादिमान् ।
पुनर्न्यासं ग्रहे कुर्यात् (द्) द्वितीयोऽस्या ग्रहो[7] जने ॥१४३॥

॥ इति प्रथममञ्जरी ॥६॥

॥ इति भाषाङ्गानि॥

*ग्रहं[8] द्विगुणसं कृत्वा तदर्धं[9] च द्वितीयकम् ।
प्रोच्य तस्मात्तृतीये च विलम्ब्य प्रथमं तथा ॥१४४॥

द्वितीयं च द्रुतीकृत्य ग्रहार्धे[10] स्थिरतां व्रजेत् ।
प्रकम्प्याथ ग्रहं तस्मात् परौ ह्रस्वौ [11]ग्रहं व्रजेत् ॥१४५॥

तत्परं च लघूकृत्य [12]ग्रहन्यासेन जायते ।
स्वस्थानं प्रथमं रामकृतेरस्या ग्रहः पुनः ॥
द्वितीयोऽपि स्वरो दृष्टः स्वरमार्गविचक्षणैः ॥१४६॥

॥ इति रामक्रीः ॥१॥

तारषड्जं ग्रहं कृत्वा [13]तद्द्वितीयतृतीयकौ ।
प्रोच्य पश्चा[द्]द्रुतीकृत्य ग्रहार्धं प्राञ्चमस्य च ॥१४७॥

स्पृष्ट्वार्धं प्रोच्य तत्राथ विरम्य प्राञ्चमस्य च ।
स्पृष्ट्वा लघुं तृतीयं च कृत्वा तत्पूर्वकौ[14] पुनः ॥१४८॥

---

[1] A. नस्येत् [2] A. ०नी D. E. ०भिः [3] E. omits राजशासनात् and the next two lines and ends this line with प्रथमं मया of the first line of verse 141.
† cf. S. R. VI 724-26 for 141-43 above.
[4] A. omits कृत्य [5] A. omits विसर्ग [6] A. दीर्घाकृत्यास्या E. दीघीकृत्याथा [7] D. E. ग्रहे
* cf. S. R. VI 735-43 for 144-51 above.
[8],[9] E. omits अनुस्वार [10] D. E. ०र्थे [11] D. E. द्रुतं
[12] D. E. ०स्यासेन [13] D. E. तत्तृतीयद्वितीयकौ [14] D. E. ०कौ



स्पृष्ट्वा स्थायिपरौ चैव लघूकृत्वा(कृत्य) द्रुतं पुनः ।
द्वितीयं प्रोच्चरेन्न्यासे [1]ग्रहस्वस्थानमादिमम् ॥
रागे गौण्डकृतौ प्रायो द्वितीयोऽस्याः [2]स्वरो ग्रहः ॥१४९॥

॥ इति गौण्डकृतिः ॥२॥

स्थायिनं धैवतं तस्य चाधं कृत्वा ग्रहस्वरम् ।
ग्रहात्(द्)द्वितीयतुर्यौ च कृत्वा[ऽऽ]हत्य द्वितीयकम् ॥१५०॥

कम्पयित्वा द्वितीयादिक्रमेण चतुरः स्वरान् ।
अवरुह्य ग्रहे न्यासात् स्वस्थानं प्रथमं भवेत् ॥
लक्ष्ये देवकृतेर्दृष्टस्तृतीयोऽपि स्वरो जनैः ॥१५१॥

॥ इति देवकृतिः ॥३॥

॥ इति क्रियाङ्गानि ॥

†पञ्चमं ग्रहतां नीत्वा तत्तृतीयद्वितीयकौ[3] ।
*किंचित् स्पृशन्[4] [5]विलम्ब्याथ द्वितीयं न्यस्यते ग्रहे ॥१५२॥

कम्पे[6] स्वस्थानमाद्यं[7] स्यात् [8]कैंशिक्या इति वांशिकाः[9] ।
लक्ष्यवर्त्मनि लक्ष्यज्ञास्तृतीयं ग्रहमुज्जगुः ॥१५३॥

॥ इति [10]कैंशिकी भाषा ॥१॥

तारषड्जं[11] ग्रहं कृत्वा द्रुतीकृत्य द्वितीयकम् ।
[12]तत्तृतीयद्वितीयौ च द्विस्त्रिः[13] कृत्वा द्रुतौ ततः ॥१५४॥

अधराधरमुच्चार्य द्वितीयं द्रुतमुच्चरेत् ।
द्विःकृत्वो वाथ त्रिःकृत्वस्तृतीये घातमाचरेत् ॥१५५॥

ततः[14] स्थायिकृते न्यासे स्वस्थानं प्रथमं भवेत् ।
ललितायाः स्वरो वंशे तृतीयो [15]लक्ष्यगोचरः ॥१५६॥

॥ इति ललिता ॥२॥

॥ इति भाषाद्वयम् ॥

---

[1] D. E. ग्रग्रे [2] A. स्वरग्रहः
† cf. S. R. VI 773-76 for 152-56 above.
[3] A. ०कं
* D. E. add the following line before this :—
कृत्वा स्पृष्ट्वा तत्तृतीयं द्वितीयं च तृतीयकम् ।
[4] A. स्पृशं [5] D. E. विलंघ्याथ [6] E. कंप्रे
[7] E. omits अनुस्वार [8] E. कौशे० [9] D. E. ०कः
[10] D. कौ० E. कौश० [11] A. omits अनुस्वार
[12] D. cancels द्वे after तत्, but E. includes द्वे after तत् ।
[13], [14] A. omits विसर्ग [15] A. लक्ष०

[1]अथ सर्वेषु वंशेषु ग्रहः[2] स्यान्मुद्रितः स्वरः ।
वंशे स्थायिपदेनात्र ग्रहः प्रायो [3]विधीयते ॥१५७॥

क्वचित् संभवतो[4] रागे [5]लक्ष्मस्थस्वरमध्यतः ।
अपन्यासग्रहन्यास-तत्संवाद्यनुवादिनः ॥१५८॥

रक्त्युद्रेकमपेक्ष्यैव भजन्ते स्थायितां स्वराः ।
द्वितीयादिपदं यत् [6]स्यात्(ल्)लक्ष्मस्थं वादनक्रमे ॥१५९॥

तद्ग्रहापेक्षया[7] योज्यमिति[8] ब्रूते हरप्रियः ।
कैश्चिद् ग्रहमेपेक्ष्येति यदाम्नातं मनीषिभिः ॥१६०॥

यः कश्चिन्मुद्रितो भूत्वा षड्जोऽन्यो वा ग्रहो भवेत् ।
तस्य षड्जत्वमापाद्यं परेषामृषभादिता ॥१६१॥

अशास्त्रीयमिवाभाति तदेतदिति मे मतिः ।
यत एवं[9] प्रकल्प्ये स्यान्निषादादिग्रहात्मनाम् ॥१६२॥

रागाणां संकरापत्तिरित्यलं[10] विस्तरे कृते ।
वंशवाद्यविधावेवं[11] रागाः[12] केचन दर्शिताः[13] ॥
[14]ऊह्यतामपरेऽनेन राजसंदर्शिताध्वना ॥१६३॥

यत्स्वरोद्भवमाकर्ण्य स्वस्थाः स्यू रिपवोऽर्थिनः ।
वर्णितः [15]कालसेनेन तेन वंशे स्वरोदयः ॥१६४॥

इति [16]श्रीराजाधिराजमहीमहेन्द्रश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे सुषिरोल्लासे वंशसंबन्धिस्वरोत्पत्तिपरीक्षणं द्वितीयं समाप्तम् ।

---

[1] D. E. अत्र [2] A. omits विसर्ग [3] D.E.[ऽ]भिधीयते
[4] E. ०भो [5] E. लक्ष्मस्तु [6] E. omits स्यात्
[7] A. ०क्ष्यया [8] D. E. ०मित्थं (E. omits अनुस्वार)
[9] E. omits एवं [10] E. omits अनुस्वार [11] E. looks like ०वेह
[12] E. omits विसर्ग [13] E. ०तः [14] A. उह्य D.E. ऊह्यं०
[15] D. E. कुम्भकर्णेन [16] D. E. श्रीकुम्भकर्णविलासे संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे सुषिरोल्लासे वंशसंबधिस्वरोत्पत्तिपरीक्षणं द्वितीयं समाप्ति समगादिति ।

# गुणदोषनाम तृतीयं परीक्षणम्

दोषा अपि गुणायन्ते [1]प्रसन्ने यत्र धूर्जटौ ।
तं नमाम्यप्रतो [2]गाने वंशकृत्यमुपेयुषाम् ॥१॥

*अथ द्वादश वक्ष्यन्ते गुणाः[3] फूत्कृतिसंभवाः ।
ध्वनिप्रचुरता व्यक्तिः स्निग्धता सावधानता ॥२॥

नादानुरणनं [4]रक्तिर्लालित्यं घनता तथा ।
त्रिस्थानत्वं श्रावकत्वं माधुर्यं सुकुमारता ॥३॥

ध्वनेः प्रचुरता नाम पीवरत्वमुदाहृतम् ।
व्यक्तः प्रौढोऽश्लथश्चैव स्निग्धो[ऽ]रूक्ष उदाहृतः[5] ॥४॥

[6]स्थायवागादिरचना-चातुर्योचितचित्तता ।
सावधानत्वमुदितं फूत्कारान्तरवर्जनम् ॥५॥

नादानुरणनं नाम घण्टाध्वनितसोदरम् ।
अनुरञ्जकता नाम रक्तिरित्यभिधीयते ॥६॥

लालित्यं गमकालाप-पेशलत्वमुदीरितम् ।
[7]त्रिषु स्थानेषु गमकैरुपेतो घन उच्यते ॥७॥

[8]त्रिस्थानव्याप्तिशक्तित्वं त्रिस्थानत्वमुदाहृतम् ।
सुदूरं श्रूयते यस्तु स श्रावक इहेष्यते ॥८॥

कोकिलालापलावण्यं मधुरत्वप्रकाशकम् ।
सौकुमार्यं कोमलतेत्येवं द्वादश कीर्तिताः[9] ॥९॥

॥ इति द्वादश फूत्कारगुणाः ॥

†यमलः स्खलित [:] स्तोकः कृशः कपिलकाकिनौ ।
संदष्टस्तुम्बकी [10]चैवाव्यवस्थित इमे नव ॥१०॥

---

[1] E. प्रसंन्ने [2] D. E. माने * cf. S. R. VI 654, 55 for 2–9 above.
[3] D. E. omit विसर्ग [4] A. व्यक्ति०
[5] E. ०ताः [6] D. E. omit this line.
[7] A. त्रिस्थानेषु [8] A. त्रिस्थाना० [9] A. omits विसर्ग
† cf. S. R. VI 657–62 for 10–16 above. [10] E. चिवा०

दोषाः[१] स्युः[२] फूत्कृतौ [3]तत्र यमलः[४] प्रतिफूत्कृतिः ।
[५]स्वस्थानस्खलनादुक्तः स्खलितः,[६] स्तोककः पुनः ॥११॥

रन्ध्रापूरणतः प्रोक्तः, कृशः कार्श्यात् प्रकीर्तितः ।
कपिलः कफतो [७]वक्त्राद्विस्वरस्फुरणे[८] स्मृतः ॥१२॥

विद्युद्विध्वस्तवृक्षोत्थरूक्ष-[९]स्वानानुकारकृत् ।
काकी काकस्वराकारतारन्यूनस्वरो भवेत् ॥१३॥

[१०]जल(व्रण?)शब्द इवाभाति योऽसौ संदष्ट उच्यते ।
तुम्बकी योऽनुरणनप्रायः प्रायेण दृश्यते[११] ॥१४॥

न्यूनाधिकस्वरो यस्तु कथ्यते सोऽव्यवस्थितः ।
फूत्कारोऽ-[१२]न्वर्थनामात्र केषांचिद्दशमो मतः ॥१५॥

इमे दोषाः समाख्याता [13]दश फूत्कारगामिनः ।
पुरा प्रकीर्णके [१४]येऽत्र कण्ठदोषाः प्रकीर्तिताः[१५] ॥
योजनीया यथायोगं ते सर्वे फूत्कृतावपि[१६] ॥१६॥

॥ इति फूत्कारदोषाः[१७] ॥

†अङ्गुलीसारणाभ्यासः सुस्थानत्वं सुरागता ।
स्वस्थानवदपस्थाने रागोद्भावनशक्तिता ॥१७॥

गतेर्वेगस्य करणं[१८] गीतवादनचातुरी ।
गातॄणां स्थानदायित्वं तद्दोषाणां च मुद्रणम् ॥१८॥

तालानुगमनं [१९]मार्गदेशीरागेषु कौशलम् ।
वांशिकस्य गुणाः प्रोक्ता दशदिग्जयिना दश ॥१९॥

॥ इति वांशिकगुणाः ॥

[१] A. omits विसर्ग
[२] E. omits विसर्ग
[3] A. यत्र
[४] D. omits विसर्ग E. ०लं
[५] D. E. स्वस्थानः
[६] A. omits विसर्ग
[७] A. वक्त्र०
[८] E. ०णो
[९] E. ०स्थाना०
[१०] E. व्रल०
[११] E. ०तो
[१२] A. यत्र
[13] D. E. दत्ता
[१४] A. यत्र
[१५] E. ०तः
[१६] A. फूत्कृता अपि
[१७] E. षः
† cf. S. R. VI 663–65 for 17–19 above.
[१८] E. ०णां
[१९] D. ०वेशी०



*एतद्गुण-[१]विपर्यासात्(द्)दोषाः प्रोक्ता महीभुजा ।
शिरसः कम्पनं मिथ्याप्रयोगस्यापि वादनम् ॥२०॥

इष्टस्थानानवाप्तिश्च त्रिभिः साकं त्रयोदश ।
इति वांशिकवर्येण वर्जनीयाः प्रयत्नतः ॥२१॥

॥ इति वांशिकदोषाः ॥

†वांशिकस्तु भवेदेको मुख्यस्तदनुयायिनः[२] ।
चत्वारश्चतुरेणेदमुक्तं वांशिकवृन्दकम् ॥२२॥

॥ इति वांशिकवृन्दलक्षणम् ॥

[3]वंशानुचरितं यस्य वर्णयन्ति मनीषिणः ।
तेन भूमीमहेन्द्रेण वर्णितं वंशगीतकम् ॥२३॥

यद्गुणा दोषनिर्मुक्तिहेतवो विदुषामपि ।
तेन [४]श्रीकालसेनेन वर्णितो गुणसंग्रहः ॥२४॥

इति श्रीराजाधिराज-[५]श्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोषे सुषिरोल्लासे [६]गुणदोषपरीक्षणं तृतीयं समाप्तम् ॥

---

* cf. S. R. VI 666, 67 for 20, 21 above.
[१] विपर्यात्
† cf. S. R. VI. 667
[२] A. ०नुवायिनः
[3] D. E. omit this verse.
[४] D. E. श्रीकुम्भकर्णेन
[५] D. E. श्रीकुंभकर्ण०
[६] D. E. omit गुण० etc. and समाप्तम्

## पावादि नाम चतुर्थ परीक्षणम्

पावादिसर्ववाद्यानि धृत्वा यो[१] वाद्यवेदिभिः ।
विनोदेन [२]नुतो वन्दे सततं गिरिजापतिम् ॥१॥

*वेणूद्भवो भवेत् पावो वङ्गपत्रैः परिष्कृतः ।
नवाङ्गुलो लोचु(?)रीतिनामा लोकेषु कीर्त्यते ॥२॥

॥इति [3]पावकलक्षणम् ॥०

†कनिष्ठिकापरीणाहगर्भरन्ध्रेण संयुता ।
द्वादशाङ्गुलदीर्घा स्यात् पाविका वेणुसंभवा ॥३॥

अङ्गुष्ठस्थौल्यसंपन्ना तत्रैकं[४] रन्ध्रमिष्यते ।
फूत्कारहेतुकं पञ्च रन्ध्राण्यन्यानि कल्पयेत् ॥४॥

स्वरनिष्पत्तिसिद्ध्यर्थं तानि लोकानुसारतः
वादनं क्रियते तस्यास्तारनादसमाश्रयम् ॥
[५]यक्षनागग्रहावेशविधायकमनेकधा ॥५॥

॥ इति पाविका ॥

‡हस्तद्वन्द्वाधिका यामा वदने रन्ध्रधारिणी ।
चतुर्भिस्तारसुषिरैः संयुता मुरली मता ॥६॥

॥ इति मुरली ॥

§शृङ्गजा दारुजा वाथ [६]काहलाकृतिधारिणी ।
चतुरङ्गुलसंयुक्तवितस्तिद्वितयायता ॥७॥

कर्तव्यं वदने रन्ध्रं बदरीबीजसन्निभम्[७] ।
त्यक्त्वाङ्गुलानि चत्वारि तस्माद् वंशविधानवत् ॥८॥

सप्तरन्ध्राणि कार्याणि [८]स्वरार्थमितराण्यपि ।
मुखरन्ध्रस्य तेषां च मध्येऽधोभागसंस्थितम् ॥९॥

---

[१] A. यं वाद्यवेदिनः
[२] A.ततं
* cf. S. R.VI 783
[3] D. E. पाव०
† cf. S. R. VI 784-86 for 3-5 above.
[४] A. omits अनुस्वार
[५] A. क्षय०
‡ cf. S. R. VI 686, 87
§ cf. S. R. VI 787-93 for 7-14 above.
[६] D. E. काहलीकृत०
[७] E. ०भ
[८] D. E. स्वरार्णं०



रन्ध्रान्तरं प्रकुर्वीत हृद्यवाद्यस्य सिद्धये ।
कर्तव्यैवं मधुकरी मधुरध्वनिपेशला ॥१०॥

मुख [च्] छिद्रे यवस्थूला ताम्रजा चतुरङ्गुला ।
निवेशनीया नलिका रुचिराकारधारिणी ॥११॥

तदूर्ध्वं चक्रिका देया शुक्तिजा दन्तजाथवा ।
ततो [१]देवानलोद्भूता [ऽ] थवा स्यात् काशसंभवा ॥१२॥

ईषदुन्मेषविस्पष्टमालतीकलिकोपमा ।
क्षेप्या छिद्रान्तरे शुक्तिः पयःपाकमृदूकृता ॥१३॥

अधोभागस्थितं रन्ध्रं वामाङ्गुष्ठेन मुद्रयन् ।
वंशवद् वादयेदेनां विज्ञो मधुकरीं सदा ॥१४॥

॥ इति मधुकरी ॥

†ताम्ररौप्यस्वर्णकांस्यादीनामन्यतमेन[२] या ।
विधीयतेऽन्तःसुषिरा हस्तत्रितयदैर्घ्यभाक् ॥१५॥

धत्तूरकुसुमाकारमुखेन समलंकृता ।
[3]हाहूवर्णोत्करा वीरबिरुदोच्चारकारिणी ॥
काहला वाद्यते लोके कोलाहलविधायिनी ॥१६॥

॥ इति काहला[४] ॥

*सैव हस्तद्वयायामा[५] प्रोक्ता तुण्डुकिनी जनैः ।
तुत्तुत्तुरिति वर्णाद्या तित्तिरीति स्मृता बुधैः ॥
‡तुण्डिकिन्यो-[६]र्युगं वाद्यमिति वाद्यविदो विदुः ॥१७॥

॥ इति [७]तुण्डिकिनी ॥

§चतुर्हस्तकृतायामा सैव [८]भुक्केति कीर्त्यते ॥१८॥

॥ इति भुक्का ॥

‖करेणुवदनाकारवदनं दधतं शुभम् ।
निर्दोषं [९]माहिषं शृङ्गं श्लक्ष्णं स्निग्धं सुसंस्कृतम् ॥१९॥

---

[१] D. E. देवनलो०
† cf. S. R. VI 794-96 for 15-16 above.
[२] A. ०मन्यवमेतया
[3] A. हाहूद्०
[४] E. ०का
* cf. S. R. VI 796, 97
[५] E. ०द्वयामा
‡ A. तुडिकिन्यो० D. E. तुंडकिन्यो०
[६] A. looks like पुंग
[७] A. तुंडुकीनी
§ cf. S. R. VI 798
[८] S. R. चुक्का
‖ cf. S. R. IV 798.-801 for 19-21 above
[९] E. omits माहिषं

धत्तूरकुसुमाकारं भृङ्गस्थानु (न) डुहस्य च ।
अष्टाङ्गुलायतं[1] खण्डं मूलेऽस्य ध्वनिसिद्धय ॥२०॥

न्यस्य[2] द्वयङ्गुलकं तस्य [च्] छित्वाग्रं [3]रन्ध्रमेककम् ।
कृत्वा फूत्कारजनकं [4]बुंकारेण तु वादयेत् ॥
विविधध्वनिगम्भीरं प्रायो गोपालकेलिषु[5] ॥२१॥

॥ इति भृङ्गलक्षणम् ॥

*उत्खातनाभेः[6] शङ्खस्य शुद्धस्यैकादशाङ्गुलम् ।
शिखरं धातुनिष्पन्नमथ [7]सिक्थकनिर्मितम् ॥२२॥

[8]हीयमानाकृतिरय[9]-मग्रान्मूलप्रदेशतः ।
शिखरस्य मुखे रन्ध्रं दधदर्धाङ्गुलोन्मितम् ॥२३॥

मध्ये माषप्रमाणेन रन्ध्रेण समलंकृतः ।
धृतः कुलीरहस्तेन [10]भूरिश्वासभृतोदरः ॥
[11]दृगुंभुंदिगिदिगीत्येतद्-[12]वर्णोद्बोधविधायकः ॥२४॥

॥ इति शङ्खलक्षणम् ॥

हस्तैकमात्रं वंशस्य[13] यत्रान्ते विनिवेश्यते ।
घटितं माहिषं श्रृङ्गं [14]तूहली सा प्रकीतिता ॥
तारनादं प्रतिभ (च?) य-[15]मस्य[16] वादनमीरितम् ॥२५॥

॥ इति [17]तूहली ॥

छिन्नाग्रं[18] घटितं श्रृङ्गं श्लक्ष्णं मृगसमुद्भवम् ।
श्रृङ्गिका सा निगदिता तारनादविधायिनी ॥२६॥

॥ इति श्रृङ्गिका ॥

---

[1] A. ०युतं [2] A. adds अनुस्वार [3] A. रन्ध्रमेव च
[4] A. E. बुकारेण [5] D. E. गोपालकेषु च
* cf. S. R. VI 802–805 for 22–24 above. [6] E. ०भैः
[7] A. सिक्तक० [8] D. E. हीन० [9] D. E. leave space blank for मग्रान्मूल
[10] E. जूरिश्वासभृतो वरः [11] A. दृगं० D. E. ०दिगदिगी (E. ०गि)०
[12] A. वर्णो बोध० D. कर्णोद्बोध० E. कर्णो बोध० [13] A. ०स्या
[14] A. तोहली [15] D. E. भयम and leave space blank for one letter. [16] A. भयम वास्यादन० [17] A. तोहिनी
[18] A. omits अनुस्वार



हृदब्जसुषिरे हरिं निवधता कुले [च] यवने [1]व्यधायि सुषिरम् ।
यया किमपि नो[2] परं च [3]पृथिवी–

भृता सुषिरवाद्यविद्याविदा[4] (?) ॥२७॥
कलानिकषकर्मठः सुषिरसंज्ञ उल्लासकः ॥

[5]इति (E. omits इति) जगदीशवनदेवनिजगणेन जगदीश्वरीकामेश्वरीचरणांकिकरेण श्रीकामाक्षागिरिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपू (A. पु०) रपराजिताचलनायकेन संगमनीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरिवारिता।ञ्जनाद्रिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनधर्षित (A. E. ता) महोरगपुरेण श्रीवनदेवस्वामिप्र[ा]सादरचनापरपरमेश्वरेण त्र्य (A. त्रयं० E. त्रियं०) म्बकेश्वरसन्निधिनिर्मित-कीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्रीकामाक्षागिरिनवीननिर्मितिपराजितसुमेरुणा श्रीमहिषाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकाल-

---

[1] E. व्यवधायि [2] A. नो देधीयते D. E. नोपि देधीयते [3] A. पृथवी०
[4] The metre is broken in this line and the next one.
[5] D. reads the colophon as follows:—
E. gives इति श्रीसरस्वतीरस which is cancelled with a horizontal line on folio 52 but the next folio begins in a changed handwriting and reads the whole colophon in agreement with A.

D. इति श्रीसरस्वतीरससमुद्भूत-कैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथमहीधरेण योगिनीप्रसादासादितयोगिनीपुरेण खण्डलदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण अजयमेरुजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलन-परिप्राप्तशाकम्भरीतोषितशाकम्भरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनधर्षितनागपुरेण अर्बुदाचलग्रहण-संदर्शिताचलाद्भुतप्रतापेन गौर्जराधीशधीरत्वोन्मूलनप्रचण्डपवनेन श्रीमत्कुम्भलमेरुनवीननिर्मितपराजितसुमेरुणा श्रीचित्रकूटभौमस्वर्गतायथार्थीकरणरचितचारुतरपथेन मेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदवदवानलेन प्रत्यर्थिपृथिवीपतितिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्य-दीक्षादानदक्षिणोद्दण्डकोदण्डदण्डमण्डिताखण्डभुजदण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेश्वरेण गजनरतुरगाधीशराजत्रितयतोडरमल्लेन राजगुर्वादिविरुदावलीविराजमानेन राजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते संगीतराजे वाद्यरत्नकोशे सुषिरोल्लासे पावादिपरीक्षणं चतुर्थं समाप्तम् । उल्लासश्च समाप्तः ॥

कालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजमहाराणाश्रीतामराजेन्द्रनन्दनेन महाराज्ञीश्रीसौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणि-निकुम्भराजन्यवंशावतंस–महाराज्ञीश्रीकर्मवती-लषुमादेवीहृदयाधिनाथेन महाराजाधिराजमहीमहेन्द्रश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे सुषिरोल्लासे पावादिपरीक्षणं चतुर्थं समाप्तम् ॥

॥ उल्लासश्च द्वितीयः समाप्तः ॥

---

# तृतीयो घनोल्लासः

## मार्गतालनाम प्रथमं परीक्षणम्

घनाघनघनध्वानसोदरे मुरजध्वनौ ।
घनोत्कण्ठं घनं वन्दे नीलकण्ठं[1] घनप्रियम् ॥१॥

॥ अथ घनम् ॥

ननु प्रतिष्ठितं सम्यक् संगीतं ताल एव यत् ।
अतस्तत्प्रागयं युक्तो वक्तुमित्येव साम्प्रतम् ॥२॥

उच्यते, मुनिवाक्यस्य प्रामाण्यात्तेन च स्वयम् ।
[2]प्रतिज्ञातमिदं वक्ष्ये[3] गीतावित्रयमित्यदः ॥३॥

न च पाठ्यवदेतस्य पृथक्त्वमभिधीयताम्[4] ।
यतः शरीरतंतस्य गीतस्य मुनिनोदिता ॥४॥

घनेन मीयते[5] गीतं तालेन च कलात्मना[6] ।
[7]अतस्तस्याप्रधानत्वं तालस्यात्र प्रतीयते ॥५॥

अन्याङ्गमप्रधानं स्यादिति न्यायविदो विदुः ।
घनान्तर्गतमेवेष्टमतस्तालनिरूपणम् ॥
कार्यसंप्रत्ययो यस्मात् प्रधाने पर्यवस्यति ॥६॥

सन्मार्गस्थितिदक्षिणं यतिलयावासं कलानां[8] गुरुं
[9]प्रोत्तालोत्प्लुतकालसंकलनया[10]न(न्य)स्यद् विरामं द्रुतम् ।
नष्टोद्दिष्टलघुक्रियाधरभवं[11] मेरुं परप्राप्तिदं
विष्वक्(ग्)दर्शित-[12]चित्तवृत्तिविशदं नित्यं भजे[13] शंकरम् ॥७॥

*[14]तलधातोः प्रतिष्ठार्थात्तालशब्दो[15] घञि स्मृतः ।
[16]प्रतिष्ठामगमद्यस्मादस्मिन्संगीतनामकम् ॥८॥

---

[1] A. omits अनुस्वार [2] D. E. सुविज्ञात० [3] E. वक्षो
[4] D. E. ०ता [5] E. ०त
[6] D. E. कला and space left blank for two letters.
[7] D. E. कृत० [8] A. ०न्यं [9] D. E. प्रोत्तारो०
[10] D. E. ०संकलया [11] A. ०भवेन् D. E. भवन् [12] D. E. ०चित्र०
[13] A. भजेत् * cf. S. R. V 2 [14] D. E. ताल०
[15] D. E. ०त्तालः शब्दोत्थ and space left blank for one letter (घञि is omitted). [16] A. प्रतिष्ठागममद्यस्यात्

कालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजमहाराणाश्रीतामराजेन्द्रनन्दनेन महाराज्ञीश्रीसौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणि-निकुम्भराजन्यवंशावतंस–महाराज्ञीश्रीकर्मवती-लषुमादेवीहृदयाधिनाथेन महाराजाधिराजमहीमहेन्द्रश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्त्र्यां संगीतमीमांसायां वाद्यरत्नकोशे सुषिरोल्लासे पावादिपरीक्षणं चतुर्थं समाप्तम् ॥

॥ उल्लासश्च द्वितीयः समाप्तः ॥

---

# तृतीयो घनोल्लासः

## मार्गतालनाम प्रथमं परीक्षणम्

घनाघनघनध्वानसोदरे मुरजध्वनौ ।
घनोत्कण्ठं घनं वन्दे नीलकण्ठं[1] घनप्रियम् ॥१॥

॥ अथ घनम् ॥

ननु प्रतिष्ठितं सम्यक् संगीतं ताल एव यत् ।
अतस्तत्प्रागयं युक्तो वक्तुमित्येव साम्प्रतम् ॥२॥

उच्यते, मुनिवाक्यस्य प्रामाण्यात्तेन च स्वयम् ।
[2]प्रतिज्ञातमिदं वक्ष्ये[3] गीतादित्रयमित्यदः ॥३॥

न च पाठ्यवदेतस्य पृथक्त्वमभिधीयताम्[4] ।
यतः शरीरतंतस्य गीतस्य मुनिनोदिता ॥४॥

घनेन मीयते[5] गीतं तालेन च कलात्मना[6] ।
[7]अतस्तस्याप्रधानत्वं तालस्यात्र प्रतीयते ॥५॥

अन्याङ्गमप्रधानं स्यादिति न्यायविदो विदुः ।
घनान्तर्गतमेवेष्टमतस्तालनिरूपणम् ॥
कार्यसंप्रत्ययो यस्मात् प्रधाने पर्यवस्यति ॥६॥

सन्मार्गस्थितिदक्षिणं यतिलयावासं कलानां[8] गुरुं
[9]प्रोत्तालोत्प्लुतकालसंकलनया[10]न(न्य)स्यद् विरामं द्रुतम् ।
नष्टोद्दिष्टलघुक्रियाधरभवं[11] मेरुं परप्राप्तिदं
विष्वक्(ग्)वशित-[12]चित्तवृत्तिविशदं नित्यं भजे[13] शंकरम् ॥७॥

*[14]तलधातोः प्रतिष्ठार्थात्तालशब्दो[15] घञि स्मृतः ।
[16]प्रतिष्ठामगमद्यस्मादस्मिन्संगीतनामकम् ॥८॥

---

[1] A. omits अनुस्वार [2] D. E. सुविज्ञात० [3] E. वक्षो
[4] D. E. ०ता [5] E. ०त
[6] D. E. कला and space left blank for two letters.
[7] D. E. कृत० [8] A. ०न्यं [9] D. E. प्रोत्तारो०
[10] D. E. ०संकलया [11] A. ०भवेन् D. E. भवन् [12] D. E. ०चित्र०
[13] A. भजेत् * cf. S. R. V 2 [14] D. E. ताल०
[15] D. E. ०त्तालः शब्दोत्थ and space left blank for one letter (घञि is omitted). [16] A. प्रतिष्ठागममद्यस्यात्

स तालः कालमानेन [1]चावापादिक्रियायुजा ।
चतुर्धासौ भवेदत्र चतुरस्रादिभेदतः ॥९॥

†चतुरस्रस्तथा त्र्यस्रो मिश्रः [2]खण्ड इति क्रमात् ।
तत्र चच्चत्पुटो ज्ञेयश्चतुरस्रः स [3]च त्रिधा ॥१०॥

क्रमादेककलस्तद्वद् द्विकलश्च [4]चतुष्कलः ।
त्र्यस्रश्चाचपुटस्तस्य भेदाः षण्मुनिसंमताः ॥११॥

आरभ्यैककलं मात्राद्विगुणद्विगुणत्वतः ।
षडावृत्त्या [5]षण्णवतिं यावत् स्युः क्रमतः स्फुटाः ॥१२॥

अन्यद् भेदत्रयं चास्य पञ्चपाण्यादिकं विदुः ।
मिश्रोऽपि तत्र विज्ञेयस्तालो युग्मौजमिश्रणात् ॥१३॥

द्रुतादिभिरविश्लिष्टै-[6]र्विश्लिष्टैर्वापि यो भवेत् ।
स तालः खण्डसंज्ञोऽत्र नानाभङ्गिमनोहरः ॥१४॥

स्यातां यथाक्षरावाद्यौ [7]प्रस्तारे द्विकलादिषु ।
गुरुरूपां कलां कृत्वा ततस्तत्परिकल्पनम् ॥१५॥

*अन्त्यः प्लुतो[8] विधातव्यश्चतुरस्रे यथाक्षरे ।
गुरुद्वयं लघुश्चैकः प्लुतश्चच्चत्पुटे[9] भवेत् ॥१६॥

ऽऽ।ऽ इति यथाक्षरश्चच्चत्पुटः ॥१॥

कलानां[10] द्वितयेन [11]स्यात्(द्) द्विकले पादकल्पना[12] ॥१७॥

ऽऽ ऽऽ ऽऽ ऽऽ इति द्विकलश्चच्चत्पुटः[13] ॥२॥

चतुष्टयेन तासां स्यात्पादभागश्चतुष्कले[14] ॥१८॥

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति [15]चतुष्कलश्चच्चत्पुटः ॥३॥

यथाक्षरे चाचपुटे गुरुद्वन्द्वान्तरे[16] लघू ॥१९॥

ऽ॥ऽ॥, ॥ इति यथाक्षरश्चाचपुटः ॥

द्विकलेऽस्मिन्पुनर्ज्ञेयं[17] गुरुद्वन्द्वं त्रिधा स्थितम् ॥२०॥

---

[1] D. E. त्वावापादि०
† cf. S. R. V 17,18
[2] A. omits खं
[3] D. E. चित्रधा
[4] D. E. चतुःकलः
[5] E. षण्वतिं
[6] D. ०विश्लिष्टै० E. ०विश्लेष्टै०
[7] E. omits प्र
* cf. S. R. V 19-26 for 16-30 above.
[8] A. प्लुता
[9] D. E. ०श्चचत्पुटे
[10] E. omits अनुस्वार
[11] D. E. स्याद्विकले
[12] E. ०ने
[13] E. ०श्चच्चप्रत्पुटः
[14] D. E. ०श्चतुःकले
[15] D. E. चतुःकल०
[16] A. ०द्वन्दान्तरे
[17] E. omits अनुस्वार



ऽऽ ऽऽ ऽऽ इति द्विकलश्चाचपुटः[1] ।

चतुर्गुर्वात्मकैः पादैस्त्रिभिर्ज्ञेयश्चतुष्कलः[2] ॥२१॥

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति [3]चतुष्कलश्चाचपुटः[4] ।

तुर्योऽस्य भेदो विज्ञेयश्चतुर्विंशतिमात्रिकः
अष्टाभिस्तत्र मात्राभिश्चरणः परिकीर्त्तितः ॥२२॥

ऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽ[5] ॥ इति [6] तुर्यो भेदः[7] ॥

अष्टचत्वारिंशता स्यात्[8] कलाभिरपरा[9] भिदा ।
कलाषोडशकस्तत्र चरणः परिकीर्त्तितः ॥२३॥

ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ
ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ[10] इति पञ्चमो भेदः ।

मात्रिकाणां षण्णवत्या भेदः षष्ठोऽस्य[11] दृश्यते ।
तत्र [12]द्वात्रिंशता [13]तु स्यात् (न्) मात्राभिः पादकल्पना ॥२४॥

ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ[14]
ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ
ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ[15]

॥ इति षष्ठो भेदः ॥

॥ इति [16]चाचपुटः ॥

[17]ईदृशैः पादभागैस्तु मात्रा [18]स्यान्मद्रकादिषु ।
तद्वत् स्यात् त्र्यस्रभेदत्वात् षट्पितापुत्रकस्त्रिधा ॥२५॥

[19]प्लुतमाद्यन्तयोरत्र विशिनष्टि यथाक्षरम् ॥२६॥

---

[1] A. ०श्चाचत्पुटः E. ०श्चाच्चपुटः
[2] D. E. ०श्चतुःकलः
[3] D. E. चतुःकल०
[4] A. ०श्चाचत्पुटः
[5] A.gives four groups of 8 'Gurus'. D. adds ॥१॥ E. adds १ before इति
[6] E. adds च after इति
[7] E. भेदाः
[8] A. omits त्
[9] D. E. ०रपराजिता
[10] D. adds ॥१॥३॥ E. adds १ ३ before इति ॥
[11] D. E. ० त्र
[12] A. द्वाविंशता
[13] A. omits तु
[14] D. adds श्रीराम here at the end of the folio to cover a short space.
[15] D. adds ॥१॥ E. adds १ before इति
[16] A. चाचत्पुटः
[17] D. writes ईदृशैः
[18] A. ०मंद्रका०
[19] A. लुप्त०

ऽ' । ऽऽ । ऽ'[1] इति यथाक्षरः षट्पितापुत्रकः ।
[2]गुरुकृतकलाश्चात्र द्विकले द्वादश स्मृताः ॥२७॥

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ इति द्विकलः षट्पितापुत्रकः ॥
[3]चतुष्कले ता द्विगुणा—ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ऽऽऽऽ ऽऽऽऽ[4] इति चतुष्कलः षट्पितापुत्रकः ॥
—स्तस्य संज्ञान्तरं परम् ।
उत्तरः पञ्चपाणिश्चेत्यादृतैरादृतं द्वयम् ॥२८॥

[5]उद्घट्टोऽप्यपरस्तालस्त्र्यस्रभेदो यथाक्षरः ।
ऽऽऽ[6] इति यथाक्षर उद्घट्टः ॥
अयमप्यत्र विज्ञेयो द्विकलश्च [7]चतुष्कलः ॥२९॥

ऽऽ ऽऽ ऽऽ ॥१॥ इति द्विकल उद्घट्टः ॥
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ[8] इति [9]चतुष्कल उद्घट्टः[10] ॥
यथाक्षरस्त्र्यस्रभेदः [11]संपक्वेष्टाक ईरितः ।
प्लुतमाद्यन्तयोरस्मिन् [12]षट्पितापुत्रके यथा ॥३०॥

ऽ' ऽऽऽ ऽ' ॥१॥ इति यथाक्षरः [13]संपक्वेष्टाकः ।
द्विचतुष्कलताप्यस्मिन् तद्वदेव भवेदिह ॥३० क ॥
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ[14] इति द्विकल[:] [15] संपक्वेष्टाकः ॥
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
इति [16]चतुष्कलः [17]संपक्वेष्टाकः ॥

---

[1] D. ऽ' । ऽ । ऽ'[॥१॥ ऽ' । ऽऽ' । । ऽ' ॥१॥ E. ऽ' । ऽ । ऽ' । ऽऽ' । । ऽ' १
[2] D. E. omit this line and the next one.
[3] D. E. चतुःकले [4] D. adds ॥१॥ E. adds १ before इति ।
[5] A. उत्घटो [6] D. E. add १ before इति
[7] D. E. चतुःकलः [8] D. adds ॥१॥ before इति
[9] D. E. चतुःकल [10] A. उद्घटः
[11] A. संपत्क्वेष्टाक D. संपत्केष्टाक E. सपत्केष्टाक
[12] D. E. omit षट्०............, and link up तद्वदेव भवेदिह in this line. [13] A. संपत्०
[14] D. E. add ॥१॥ and १ respectively before इति
[15] A. संपत्० D. संपत्के० E. संपत्को०
[16] D. E. चतुःकल [17] A. संपत् D. E. संपत्के०



*[1]तस्य [2]प्रागेवाभिहितं लक्ष्म संज्ञापरीक्षणे ।
मार्गदेशीविभेदेन स द्वेधा गदितो बुधैः ॥३१॥

द्विकमाद्यं[3] मार्गसंज्ञं परं देशीतिकीर्तितम् ।
निःशब्दा [4]शब्दयुक्ता च तत्राद्यस्य क्रिया द्विधा ॥३२॥

आवापश्चाथ [5]निष्क्रामो विक्षेपश्च प्रवेशनम् ।
इमाः कलाश्चतस्रश्च निःशब्दा इति कीर्तिताः ॥३३॥

ध्रुवः शम्या तथा तालः सन्निपात इमाः[6] कलाः ।
सशब्दाः पातसंज्ञाश्च चतस्रः परिकीर्तिताः ॥३४॥

ध्रुवादीनां चतुर्णां तु नित्या [:] पाताभिधा मताः ।
पाक्षिकी तु कला संज्ञा क्रमोऽप्येषां विविच्यते ॥३५॥

पातानां पूर्वमुद्देशो [7]युज्येतैककलत्वतः ।
ततो द्विकलिकावर्हों[8] [9]निष्क्रामाख्यप्रवेशकौ ॥
तत आवापविक्षेपौ [10]चतुष्कलतयान्वितौ ॥३६॥

सत्यप्येवं[11] परादृष्टसाधनत्वात् (द्) विदांवरैः ।
चतुः(चतुष्)कलादेः प्रथममुद्देश्यत्वं समीरितम् ॥३७॥

मद्रकाण्यत एवादौ [12]निरदिक्षन्महामुनिः ।
अतोऽत्र पादभागेषु द्विकलादिविधाविह ॥३८॥

निःशब्दाः[13] पूर्वमुद्दिष्टाः पातास्तु तदनन्तरम् ।
सर्वपातानुगामित्वात्तत्र स्यात् प्रथमं ध्रुवः ॥३९॥

†शम्या दक्षिणहस्तस्य प्रयोग[14]-स्तदनन्तरम् ।
तदनन्तरतस्तालो यतो वामकरोद्भवः ॥४०॥

---

* cf. S. R. V 4-6 for 31-34 above.
[1] तस्य appears to stand for तालस्य । 'Tāla' has been defined in S. Raj. I. 2. 3. 60 (Vol. I p. 26).
[2] D. E. प्रागभि० तु [3] D. repeats ०माद्यं E. मार्गज्ञसंज्ञं
[4] D. E. शब्दसंयुक्ता (E. ०तो) च is omitted.
[5] D. E. निःक्रामो [6] E. इमोः
[7] A. उज्येतैक० D. E. युज्यतैक० [8] A. ०बर्हों
[9] D. निःक्रामा० E. निक्रामा०
[10] A. ०तयोन्वितौ D. E. चतुःकलतयोचितौ
[11] E. omits अनुस्वार [12] E. निरा० [13] A. omits विसर्ग
† cf. S. R. V 7-10 for 40-44 above. [14] E. प्रयोगं

[१]तयोभय-[२]करोत्पाद्यः सन्निपातस्ततो भवेत् ।
उत्तानस्य करस्य [३]स्यादावापो-[४]ऽङ्गुलिकुञ्चनात् ॥४१॥

[५]निष्क्रामोऽधस्तलस्य स्यादङ्गुलीनां प्रसारणात् ।
[६]विक्षेपः पार्श्वतः [७]क्षेपात् पाणेरुत्तानितस्य तु ॥४२॥

[८]प्रसारिताङ्गुलीकस्य[९] निर्दिष्टः पृथिवीभुजा ।
पाणेरधस्तलस्य स्यात् [१०]प्रवेशो-[११]ऽङ्गुलिकुञ्चनात्[१२] ॥४३॥

[१३]द्वयोरेकतरस्यात्र छोटिका शब्दपूर्वकम् ।
पाणेः [१४]संपातनादुक्तो ध्रुवो विश्लेषवर्जितः ॥४४॥

[१५]गातुः पापस्य [१६]शमनात् शम्या (०च्छम्या) दक्षिणपाणिना ।
वामपाणितलाघातादुक्ता प्रत्यर्थिघातिना ॥४५॥

प्रतिष्ठार्थतया[१७] धातोरदृष्टस्यापकत्वतः ।
तद्विपर्यय-[१८]तस्ताल-[१९]स्तालवित्[२०]-कीर्तिनोदितः ॥४६॥

[२१]सन्निपातो मिथः सम्यक् पाणिद्वयनिपातनात् ।
चच्चत्पुटाद्याद्यगुरु[२२]-कलाया अपरा कला[२३] ॥४७॥

द्विकलत्वविधौ[२४] सा ज्ञै-[२५]र्निष्काम इति कीर्तिता ।
यदा पूर्वप्रदेशे सा पुन-[२६]र्विक्षिप्यते कला ॥४८॥

तदा विक्षेपसंज्ञा स्यात्तथाभिनययोगतः ।
तत्र चेत् पूर्वपातं तं त्यक्त्वा भावो[२७]द्वितीयके ॥४९॥

[२८]द्वितीया[ऽ]स्याः संप्रवेशे[२९] प्रवेशाख्या कला भवेत् ।
अनेनैव विधानेन देशीतालेषु जानता ॥५०॥

---

[१] A. तथाभय
[२] E. कः रो०
[३] D. स्यादाघापो० E. स्यादाद्याणापो०
[४] A. गुलि०
[५] D. E. निःक्रामो०
[६] A. विक्षेपा D. विःक्षेपः E. विःक्षोपः
[७] E. क्षोपात्
[८] A. प्रसारिकां० E. प्रसारितों
[९] A. ०स्या
[१०] D. E. प्रवेशां०
[११] A. ०गुलि०
[१२] E. कुचनात्
[१३] D. E. त्रयोरेक० (E. ०रेकतस्यात्र, omits र)
[१४] A. संपादना०
[१५] E. गांतेतुः
[१६] E. शमनत्
[१७] A. ०मया
[१८] A. ०ततस्ताल०
[१९] D. E. ०ताल (omit स्)
[२०] A. ०स्तालभिः कीर्तनोदितः
[२१] D. संन्नि०
[२२] E. ०गुल०
[२३] D. E. add विसर्ग
[२४] E. ०विघो
[२५] D. E. ०र्निःक्राम
[२६] A. ०र्विक्षेपते
[२७] A. भावे
[२८] A. द्वितीयस्याः
[२९] E. ०श



कलापातविधिर्ज्ञेयो मिश्रत्वान्मिश्रितः[१] क्वचित् ।
यदा विधीयते तालो[२] बुधैरेष चतुः(चतुष्)कलः ॥५१॥

तदंको गुरुरस्यैव विधातव्य-[३]श्चतुष्कलः ।
अस्मादेवात्र विज्ञेयः पादभाग-[४]श्चतुष्कलः[५] ॥
मुख्यत्वमत [६]एवात्रावापस्यैव निगद्यते ॥५२॥

केचित्[७] शम्यादि-(०च्छम्यादि)शब्देन छोटिकामाहुरञ्जसा[८] ।
तावान् [९]किं तन्मते पातोऽथवा पातद्वयं भवेत् ॥५३॥

पातैक्ये चित्रमार्गेऽस्या[१०] द्विमात्रासंभवो भवेत् ।
पातद्वये विरुद्ध्येत [११]लक्ष्ममस्य विपश्चितः ॥५४॥

तथाहि शम्यायुक्तायां गीतौ पाते द्विमात्रिके ।
गीतसाम्यं[१२] न भज्येत कथं तत्तेन कथ्यताम् ॥५५॥

तृतीयपक्षाङ्गीकारे शम्यादेर्ध्रुवपाततः[१३] ।
नैवमेका भवेन्मात्रा ध्रुवे [१४]शम्यादिके पुनः ॥५६॥

मात्राद्वयं कथं तत्र[१५] नैवमित्यपि सुन्दरम् ।
यतो यथाक्षरे चच्चत्पुटे लघ्वंशगोचरः ॥५७॥

शम्यादिमातृको दृष्टो ध्रुवोऽप्येककले तथा ।
उपोहने [१६]मद्रकादौ द्विमात्रः सद्भिरिष्यते ॥५८॥

अथानियतपातोऽत्र ध्रुवः(?)शम्यादिनो तथा (यदा ?) ।
तर्हि ध्रुवो (वः) किं न भवेत् शम्या (०च्छम्या) वा ताल एव वा[१७] ॥५९॥

वृत्ति-[१८]दक्षिणयोर्यद्वदथवा ध्रुव इष्यते ।
सर्पिण्याद्येतयोर्मध्ये छोटिका न तदा[१९] मता ॥६०॥

---

[१] A. ०मिश्रतः
[२] E. तालौ
[३] D. ०श्चतुःकलः E. ०तुःकलः (omits श्च)
[४] D. E. ०श्चतुः०
[५] A omits विसर्ग and repeats this line, the repeated version contains विसर्ग ।
[६] A. एवास्या०
[७] D. केचिशम्यादि० E. कैंचिबम्यादि०
[८] E. ०राजसा
[९] E. किंचिन्मते
[१०] D. E. ०स्य
[११] A. looks like लक्ष्य०
[१२] E. ०स्यम्यं
[१३] A. ०ता D. E. ०लता
[१४] A. संज्ञादिके
[१५] D. E. तत्तो
[१६] A. मत्रकादौ
[१७] A. च
[१८] A. ०र्दक्षिण० (adds रेफ)
[१९] A. तथा

हस्तपातो [ ऽ ? ] व्यवहितः[१] शम्यादिस्तु यथास्थितः ।
पातस्य वक्तुं प्राधान्यं शम्यादौ तु लि(वि)लिख्यते ॥६१॥

छोटिकां भरताचार्यो न [२]समस्मरदप्युत[3] ।
यतो दक्षिणहस्तस्य पातः शम्येति कीर्तितम् ॥६२॥

चतुर्विधस्य पातस्य सशब्दत्वं यदादिशत् ।
तेनैवोदाहृता सम्यक् शम्यादीनां सशब्दता ॥६३॥

अन्यथा पातमेवैषामभ्यधाम्र [४]सशब्दताम् ।
ध्रुवपातो (तं) यदोच्येत मार्गयोर्ध्रुवचित्रयोः ॥६४॥

शम्याविकाः प्रयुज्यन्ते तदा [ऽ?] नियत[५]–हस्ततः ।
ध्रुवो नियतहस्त [ : ] स्यादित्येषात्र विविक्तधीः ॥६५॥

वृत्तिदक्षिणयोः [६]कैश्चिच्चतुरस्रे यथाक्षरे ।
सर्पिण्याद्याः समादिष्टाः शम्यादिष्वपि तन्मते ॥६६॥

ध्रुवस्तेभ्यो भवन् ब्रूहि कथं पार्थक्यमर्हति ।
नैवं शम्यादयो यस्माच्चतुरस्रानुगामिनः[७] ॥६७॥

ध्रुवः[८] शम्याद्यनुगतः[९] स्वातन्त्र्येण विवक्षितः ।
कलामानमिह ज्ञयं मार्गभेदवशाद् बुधैः ॥६८॥

एकमात्रा[१०] कला ज्ञेया ध्रुवे, चित्रादिके पुनः ।
तत्कालमानकलनात् कलाविद्भिः[११] कलोदिता ॥६९॥

मार्गत्रितयहेतुत्वान्मार्गता [ऽ ?] ध्रुवगामिनी[१२] ।
यतोऽन्येषु ध्रुवकला निर्गच्छन्ति विशन्ति च ॥७०॥

अतश्चित्रादिकानां[१3] तु त्रयाणां मार्गता मता ।
दृश्यन्ते वार्तिके मार्गे चतस्रो[१४] ध्रुवगाः[१५] कलाः ॥७१॥

[१] E. breaks here at व्यवहितः and goes on to verse 65 beginning with शम्यादिकाः प्रयुज्यन्ते
[२] A. omits सम०
[3] A. adds विसर्ग
[४] A. शब्दताम् (omits स)
[५] A.० नियम०
[६] A. कैश्चिचतुरस्रे
[७] D. E. ०च्चतुरस्रादिगामिनः
[८] E. ध्रुवा
[९] A. ०नुगतेः
[१०] D. ०मत्रा
[११] A. omits विसर्ग
[१२] E. मिनि
[१३] E. omits अनुस्वार
[१४] A. adds विसर्ग
[१५] E. omits विसर्ग



विशन्त्यो[१] दक्षिणत्वेन चित्रस्तु द्विकलस्ततः ।
†मात्रादीनां लक्षणं तु प्रोक्तं लक्ष्मपरीक्षणे ॥७२॥

उत्तरोत्तरतो मार्गत्रितये द्विगुणाः कलाः[२] ।
अष्टानां तत्र मात्राणां[3] नामानि व्याहरामहे ॥७३॥

*ध्रुवका सर्पिणी कृष्या[४] पद्मिनी च विसर्जिता ।
उत्क्षिप्ताख्या पताका च पतिता चाष्टमी मता ॥७४॥

छोटिका-शब्दपूर्वं[५] तु पात आसां प्रकीर्तितः ।
अतः प्रयोगमासां तु ध्रुवपातानुगं विदुः ॥७५॥

नावापादिषु तेनेमाः[६] प्रयोज्याः स्युः[७] कथञ्चन ।
अथासां लक्षणं वच्मि पूर्वशास्त्रानुसारतः ॥७६॥

करघाताद् ध्रुवा ज्ञेया वामगा[८] सर्पिणी मता ।
दक्षिणे गमनात् कृष्या स्यादधोगा तु पद्मिनी ॥७७॥

विसर्जिता बहिः पाता[९] विक्षिप्ताऽङ्गुलिकुञ्चनात् ।
ऊर्ध्वगात्र (तु) पताका[१०] स्यात् पतिताऽन्वर्थसंज्ञया ॥७८॥

आसारिते मुखाद्यङ्गे ध्रुवपाताञ्चिते बुधैः ।
आवापादिक्रियाबाह्ये ध्रुवकाद्याः समीरिताः ॥७९॥

सम्यगेतासु मात्रासु प्रयुक्तासु नियोगतः ।
अय[११]सङ्घविनाशः[१२] [१३]स्यादाचार्यस्यानुशासनात् ॥८०॥

‡ध्रुवकापतिते स्यातां चित्रे, मार्गे तु वार्तिके ।
ध्रुवका सर्पिणी [१४]तद्वत् पताकापतितेऽपि च ॥
चतस्रो मातृका ज्ञेयाः क्रमादष्टौ च दक्षिणे ॥८१॥

[१] E. ०त्ये
† vide S. Raj. I 2. 3. 57–61 (Vol. I p. 25, 26)
[२] A. omits विसर्ग
[3] E. omits अनुस्वार
* cf. S. R. V 12-14 for 74-78 above.
[४] A. D. कृश्या S. R. कृष्णा
[५] E. omits अनुस्वार
[६] D. E. omit विसर्ग
[७] A. omits विसर्ग
[८] E. वाममा
[९] E. ०घाता
[१०] A. adds अनुस्वार
[११] D. E. अद्य
[१२] A. omits विसर्ग
[१३] E. स्यादार्यस्यानु०
‡ cf. S. R. V 15, 16.
[१४] E. तद्वयाकापतिति

चित्रशब्देन केचित्तु[1] चतुरस्रं यथाक्षरम् ।
केचिद् गुरुकृतकलं केचित् कालं[2] तु[3] तन्मितम् ॥८२॥

प्राहु-[4]र्गीतिपरिच्छेद्यं, नाद्यस्तत्र यतः[5] स्मृतः ।
लघौ प्लुते द्विमात्रत्वाभावश्चित्रविरोधकृत् ॥८३॥

द्विमात्रत्वात् स्वभावेन [6]गुरुष्वपि विचित्रता ।
चित्रस्यैव[7] परिच्छेदात्तृतीयस्य कथा वृथा ॥८४॥

स्वभावाद् गुरवो लोके द्विद्विमात्रास्तथा सति ।
चित्रमार्गे द्विमात्रत्वं सुवचं न कथञ्चन ॥८५॥

मार्गो नाम कलामानभेद इत्याद्यसंकथा ।
मार्गशब्दः क्रियावाच्यः प्रसिद्धो लोकवेदयोः ॥८६॥

तथा हि लौकिको मार्गो वैदिकोऽयमिति प्रथा ।
अत [8]आवापशम्यादेर्या क्रिया कुञ्चनादिका ॥८७॥

सैवोक्ता मार्गशब्देन मूलभूते ध्रुवे ततः ।
मार्गे [9]कलैकिका मात्रा [10]तामेव द्विगुणीकृते[11] ॥८८॥

चित्रयन् चित्र इत्युक्तस्तामेव ध्रुवजां[12] कलाम् ।
चतुर्गुणां वार्तयैव कुर्वन् वार्तिक उच्यते ॥८९॥

एकस्यैव लघोर्यत्र चतुर्मात्रत्वकीर्तनम् ।
सा वार्तैव यतो लोका लघुगुर्वादिकानिह[13] ॥९०॥

[14]प्रयुज्यन्ते न वा वर्णान् चतुरादिकमात्रिकान् ।
सैवैकात्र [15]ध्रुवकला दक्षिणेऽष्टगुणा भवेत् ॥९१॥

यतो दक्षिणमार्गस्य प्राप्तिर्लोके क्रियापहा ।
अतो न दक्षिणे मार्गे कलावृद्धिरतोऽधिका ॥९२॥

कैश्चित् कालः परिमितो मार्गशब्देन गीयते ।
यथा चित्रे[16] भवेत् कालो निमेषैर्दशभिर्मितः[17] ॥९३॥

---

[1] A. किंचित्तु
[2] E. omits अनुस्वार
[3] A. सुसम्मितम्
[4] E. omits रेफ
[5] D. E. omit विसर्ग
[6] A. न गुरुष्वपि चित्रता D.E. गुरुश्चापि
[7] E. ०स्योपि व is struck off after पि
[8] E. आवप०
[9] E. कलि०
[10] E. तमेव
[11] D. adds विसर्ग
[12] E. ०जो
[13] D. E. ०कानि च
[14] D. प्रयुञ्जते
[15] E. ध्रुवा
[16] A. चित्र
[17] D. E. ०र्मतः



विंशत्या वार्तिके तैश्च द्विगुणैर्दक्षिणो[1] भवेत् ।
ध्रुवो ध्रुवतयैव स्यादेकमातृक एव सः ॥९४॥

केचित् सर्वलघुं तालं न कञ्चिदिह मन्य(न्व)ते ।
[2]लघ्वभावादिमे मार्गा भजन्ते क्व स्वरूपताम् ॥९५॥

नैवं, चच्चत्पुटाद्यास्तु सर्वे स्युर्लघवस्तदा ।
गुर्वाद्या [3]द्विकलाधाने विश्लेष्यन्ते यदा बुधैः ॥९६॥

[4]नो चेदेवं चित्रलक्ष्म सर्वगेषु वृथा भवेत् ।
चतुरस्रे लघुगुरुप्लुतात्मनि यथाक्षरे ॥९७॥

चित्रमानं स्मृतं त [ ज् ] ज्ञैः कलौघापेक्षयैव हि ।
द्विमात्रा हि कला साक्षान्न सर्वत्र समीक्ष्यते[5] ॥
अतः कलापातमार्गलक्षणं कीर्तितं मया ॥९८॥

॥ इति कला-पात-मार्ग-लक्षणम् ॥

यः कालो वर्तते मध्ये कलयोर्लय एव सः ।
लीङ्धातोः[6] श्लेषणार्थत्वादिह लघ्वन्तरेण यः ॥
आश्लेषो लयनात् सोऽत्र लयशब्देन गीयते ॥९९॥

*ते [7]लयास्त्रिविधा ज्ञेया द्रुतमध्यविलम्बिताः[8] ।
आदौ प्रयुज्य [9]लघ्वाद्यमर्धं चेत्तत्परं द्रुते ॥१००॥

विश्रम्य प्रविशेल्लघ्वन्तरे [10]द्रुतलयस्तदा ।
एवं विश्रान्तिरत्र स्यात् (द्) द्रुतमात्रैव केवला ॥१०१॥

मध्यो लयोऽध्यर्धमात्राविश्रान्त्या[11] [12]सम्मितो मतः ।
विलम्बिते तु विश्रान्तिः[13] सार्धमात्राद्वये भवेत् ॥१०२॥

अर्धमात्राकृतावत्र[14] मात्रा ज्ञेया चतुर्लघु ।
तामर्धीकृत्य विश्रान्तिः कर्तव्या पञ्चमे लघौ ॥१०३॥

---

[1] D. E. ०णे
[2] E. लघ०
[3] A. द्विकलो०
[4] E. शेवेदेचं
[5] D. E. ०क्षते
[6] A. omits विसर्ग
* cf. S. R. V. 44
[7] E. भया० A. ०त्रिविधा (omits स्)
[8] E. ०विलविता
[9] E. लघा०
[10] E. द्रुतलघु०
[11] E. मात्राद्वये भवेत् i. e. the fourth foot is reproduced here and the second-third feet are omitted.
[12] D. सम्मतो
[13] D. omits विसर्ग
[14] E. ०वम्र

[1]गीतादिविषये लक्ष्म [2]सर्वत्रैतल्लयस्य हि ।
स्वरयोर्वर्णयोर्वापि मध्यकालो लयः[3] स्मृतः ॥१०४॥

अधुना क्रमतो वक्ष्ये [4]लयानेतान् प्रयोगतः ।
लयः सोऽत्र द्रुतो ज्ञेयो यत्र तालान्तरं यतः[5] (गतः ?) ॥१०५॥

गाता [6]प्रयोक्तुं शक्नोति क्षिप्रत्वेन न[7] कर्हिचित् ।
स मध्यमो लयो यत्र गीतं द्रुतलयं परैः ॥१०६॥

[8]द्विर्गीयते यदेवात्र तत्सकृद्गीयते स्फुटम् ।
यन्मध्येन [9]लयेनात्र द्विर्गीतं[10] सकृदेव तत् ॥१०७॥

चेद्गीयते तदा प्राह [11]विलम्बितलयं नृपः ।
चित्रवार्तिक-दक्षेषु मार्गेषु [12]क्रमतो लयान् ॥१०८॥

द्रुतमध्यविलम्बाह्वान् दन्तिलप्रमुखा[13] जगुः ।
एवं कश्चिद्ध्रुवे मार्गे न लयस्तन्मते भवेत् ॥१०९॥

गान्धर्वासंग्रहान्मार्गो[14] ध्रुवो नास्तीति चेन्न तत् ।
[15]तदभावे कथं गेयं लघ्वष्टकपरिष्कृतम्[16] ॥११०॥

मद्रकं ह्येककलिकं, देशीताला अथ [17]स्फुटम् ।
मीयन्ते [18]सर्वलघवस्तस्मादेषोऽस्ति गम्यते ॥१११॥

तत्सद्भावा-[19]ल्लयोऽप्यत्र कश्चिद्भवति निश्चितः ।
वर्णे पदे तथा वाक्ये [20]लयत्रैविध्यमिष्यते ॥११२॥

परस्परं यदेतानि प्रोच्यन्ते कालसाम्यतः ।
[21]तदैतेषु त्रिधा ज्ञेयो [22]लयो लयविचक्षणैः ॥११३॥

---

[1] D. E. पीतादि० [2] A. सर्वत्रै० E. ०तल्लयास्य
[3] A. omits विसर्ग [4] A. लयो० E. लय०
[5] D. gives य over त of ततः without cancelling त
[6] E. प्रत्येक्तुं [7] A. omits न
[8] E. द्विगीयते (omits रेफ)
[9] A. मध्ये लयनेनात्र [10] E. द्विगीत नक्रुदेव
[11] D. विलंबित्त० [12] E. क्रतो
[13] E. ०खो [14] E. गान्धर्वसंग्रहान्मार्गो
[15] E. तेद० [16] D. E. ०परिस्कृतम्
[17] E. स्फुलं ट (ल is not cancelled)
[18] E. ०लेघस्तस्मादे० [19] A. ०लयो०
[20] D. E. लयं [21] D. E. तदेतेषु [22] E. omits लयो



भो भो रोरविह ज्ञेयो लयोऽक्षरगतो[1] बुधैः ।
रामचन्द्रपदाम्भोजमित्यादिपदसंश्रयः ॥११४॥

मुरारिचरणाम्भोजं श्रयेऽहं सततं शुभम् ।
इत्यादिवाक्यगो ज्ञेयो [2]राजराजोपदेशतः ॥११५॥

॥ इति लयाः ॥

नृत्येऽङ्गकर्मणां स्थायिमुखानां गीतिगामिनाम् ।
तद्(द्र)यादीनां च पाटानां वाद्यसंगतिचारिणाम्[3] ॥११६॥

*लयस्य किंचित्कालानुवृत्तौ[4] नियमनं[5] यतिः ।
समा श्रो(स्रो)तोगता गोपुच्छिकेत्येषा त्रिधा मता ॥११७॥

प्रतिस्वं[6] सा पुनस्त्रेधा तत्तल्लयसमागमात्[7] ।
आदिमध्यान्तगो यस्मादेक एव लयो भवेत् ॥११८॥

लयसाम्येन सर्वत्र समेयं यतिरीरिता ।
स्रोतोगता यतिर्यत्र [8]लयव्युत्क्रमतः[9] क्रमात् ॥११९॥

द्रुतस्थाने यदा मध्यो लयोऽस्यां दृश्यते पुनः ।
तदा भेदो द्वितीयोऽस्या भुवो भर्त्रा निगद्यते ॥१२०॥

क्रमात् श्रो(स्रो)तो यदा गच्छत्युन्नतत्वं[10] द्रुतं चलन् ।
तद्वदेषापि विज्ञेया द्रुतयोगाद् विलम्बितम् ॥१२१॥

व्रजन्ती क्रमतो लोके[11] ख्याता श्रो(स्रो)तोगता बुधैः ।
आदौ मध्यलये नीते तृतीयाऽस्या विधा भवेत् ॥१२२॥

यदा श्रो(स्रो)तोगता त [ज्] ज्ञैर्विपर्यासाद्विरच्यते[12] ।
तदा[ऽ]सौ त्रिविधा ज्ञेया गोपुच्छाह्वा[13] यतिर्बुधैः ॥१२३॥

विलम्बितद्रुताभ्यां सा चतुर्धाऽपि परैः स्मृता ।
सा रक्ति(क्त्य ?)भावान् (द्) गीतज्ञैरुपेक्षापक्ष ईरिता ॥१२४॥

लघुद्वयाल्लघोः पूर्ति[14] दृष्ट्वा[15] कैश्चिदिहेरितम् ।
यत्योर्लयद्वयं तच्च मनोराज्यविजृम्भितम् ॥१२५॥

॥ इति [16]यतिलयः ॥

---

[1] E. ०गतौ [2] D. E. राजा० [3] E. ०चाणाम् ।
* cf. S. R. V 46, 47
[4] A. ०वृत्तो [5] D. looks like निदमनं [6] E. omits अनुस्वार
[7] E. ०समागतात् [8] A. लया० [9] E. ०ताः; omits क्रमात्
[10] A. ०त्युनस्तत्त्वं D. E. ०त्युन्नतत्वं (E. ०स्व)
[11] D. E. लोकै (E. ०के) स्याता
[12] D. E. ०विपर्यासो० [13] D. E. ०ख्या
[14] E. omits अनुस्वार [15] A. दृष्टा [16] D. E. यतिः (omit लयः)

गीतादिमानं विदधत्तालो[1] [2]लौकिकतामियात् ।
स एवात्र लयो[3] नाम यत्यवच्छिन्नतामितः ॥१२६॥

आवापादिक्रियस्तालो [4]गान्धर्वे यस्तु कीर्तितः ।
गीतादिकं परिच्छिन्दन् स तालः काल [5]एव हि ॥१२७॥

सर्पिण्यादिक्रियायोगो गान्धर्वे यस्तु कीर्तितः ।
रक्तिमाधुर्यविरहात् सोऽदृष्टफलदः परः ॥१२८॥

लौकिके तु पुनर्गीते[6] दृष्टादृष्टफलप्रदे ।
श्रोतृचित्तप्रसत्त्यर्थं ध्रुवपातादिका क्रिया ॥१२९॥

[7]चतुरस्रस्तथा त्र्यस्रो द्वौ तालौ मुनिनोदितौ ।
तत्र चच्चत्पुटस्यैव गीतसर्वस्वभूमिषु ॥१३०॥

प्रयोगो जातिषु प्रायो बाहुल्येन यदीक्ष्यते ।
तथोत्तमानां पात्राणां प्रवेशे[8] विधिरीक्ष्यते ॥१३१॥

तत्रायं पूजितः[9] [10]प्राचामार्याणां [11]श्रितो मतात् ।
[12]न तु चाचपुटो यस्मादधमानामयं [13]मतः ॥१३२॥

पुरा प्रसन्नवदनः पञ्चवक्त्रः कदाचन[14] ।
चतुर्भिर्वदनैर्वर्णान् चतुरः समुदीर्य च ॥१३३॥

चच्चत्पुट इमान् पश्चाद् विश्रान्तः पार्वतीपतिः ।
ततोऽयं सर्वलोकेषु [15]पूज्यतामगमत् सदा[16] ॥१३४॥

पञ्चवक्त्रस्य तुष्ट्यर्थं पञ्चवक्त्रविनिर्गता[:] ।
पञ्चतालाः समुद्दिष्टा मार्गे सन्मार्गदर्शिना ॥१३५॥

इति श्रीराजाधिराज-महीमहेन्द्र-[17]श्रीकालसेनविरचिते संगीतराजे [18]षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे घनोल्लासे मार्गतालपरीक्षणं प्रथमं समाप्तम् [19]।

---

[1] D. E. ०लौ [2] A. लौकितामियात् [3] E. लघो
[4] D. E. गाधर्वे [5] A. येव
[6] D. पुनगीते (omits रेफ) [7] D. चतुरस्रस्तधा E. चतुरस्रधा
[8] D. E. ०शो [9] D. E. omit विसर्ग
[10] D. E. प्राया० [11] A. looks like श्रता
[12] A. तं [13] A. ततः [14] E. adds विसर्ग
[15] E. पूज्यमा० [16] E. adds अनुस्वार [17] D. E. ०श्रीकुम्भकर्ण०
[18] D. E. omit षोडश······मीमांसायां
[19] D. adds श्रीरामाय नमः कल्याणं भूयात् । श्री श्री (repeated many times), D. and E. end here.

# देशीतालनाम द्वितीयं परीक्षणम्

[1]चतुर्मुखमहं वन्दे जयमङ्गलवर्धनम् ।
श्रीकीर्तिविजयानन्द (न्दं)ललितोत्सवदीपकम् ॥१॥

लीलाकन्दर्पविजय (यं) सिंहविक्रमसुन्दरम् ।
पार्वतीलोचनानन्द (न्दं) ललितं शंकरं भजे ॥२॥

राजक्रीडारतिं नत्वा [2]मुकुन्दं रङ्गदीपकम् ।
लक्ष्मीशं वनमालाङ्कं देशीतालानहं ब्रुवे ॥३॥

शोभानतिक्रमात् कांस्यतालादिध्वननश्रिया ।
लघ्वादिमितया कालक्रियया संमितो मतः ॥४॥

देशीतालस्तस्य संज्ञा खण्डताल इतीरिता ।
यतोऽत्र चतुरस्रादेर्गुर्वाद्याः[3] खण्डशः कृताः ॥५॥

द्रुतलघ्वादिरूपेण निवेश्यन्तेऽथवा बुधैः ।
लघ्वादिखण्डाधिक्येन खण्डतालत्वमीर्यते ॥६॥

लक्षणं तु द्रुतादीनामुक्तं लक्ष्मपरीक्षणे[4] ।
लिपौ बिन्दुर्द्रुते ज्ञेय ऋजुर्ह्रस्वो लघौ भवेत् ॥७॥

सविरामे द्वये मात्रायुता लिपिरुदाहृता ।
गुरौ वक्रः प्लुते मात्रायुतः प्रोक्तः स एव हि ॥८॥

द्रुते स्याद्देवता शम्भुर्हिमवद्दुहिता लघौ ।
शिवौ गुरूणि(गुरुणी) संप्रोक्तौ लुप्ते (प्लुते) ब्रह्मादयस्त्रयः ॥९॥

अथोद्देशो महीभर्त्रा तालानामिह तन्यते ।
[5]आदितालो द्वितीयश्च तृतीयश्च चतुर्थकः ॥१०॥

पञ्चमः सिंहलीलश्च श्रीरङ्गो वीरविक्रमः ।
हंसलीलो गजलीलः कन्दर्पः सिंहविक्रमः ॥११॥

त्रिभिन्नो दर्पणो रङ्गः प्रत्यङ्गो रङ्गदीपकः ।
सिंहविक्रीडितो हंसनादस्तुरगलीलकः ॥१२॥

---

[1] F. begins with श्रीगणेशाय नमः
[2] F. मुकुदं [3] A. omits विसर्ग
[4] vide S. Raj. I 2. 3, 59 (Vol. I p.25)
[5] cf. S. R. V 239-53 for 10-27 above. It may be noted that S. R. mentions 120 Tālas as against 138 in our text.

राजतालो जयो वर्णो वर्णभिन्नः कुडुक्ककः ।
राजचूडामणी रङ्गोद्योतः शरभलीलकः ॥१३॥

त्रिभङ्गिरङ्गाभरणौ रतिलीलो जयप्रियः ।
राजविद्याधरः कीर्तिर्जयश्रीः कोकिलाप्रियः ॥१४॥

मङ्गलः सुन्दरो द्वन्द्वः कलापः [1]कोमलो जयः ।
वल्लभः सारसश्चण्डः षट्तालः करुणो[2] गजः ॥१५॥

वर्धनो मल्लिकामोदः सिंहश्चन्द्र[3]-कला रतिः ।
प्रतापशेखरो लीला पार्वतीनन्दनः समः ॥१६॥

श्रीकीर्तिःबिन्दु (०र्तिबिन्दु०) माली च विजयो जयमङ्गलः ।
मदनो विजयानन्दो मकरन्व उदीक्षणः ॥१७॥

रूपनारायणो राजमृगाङ्कः सिंहनन्दनः ।
क्रीडा सरस्वतीकण्ठाभरणो रागवर्धनः ॥१८॥

नन्दनो विषमो नान्दी पार्वतीलोचनो हरः ।
स्कन्दोऽभिनन्दः कुमुदो दीपकः कुन्द (कन्दु) काभिधः ॥१९॥

अभङ्गो गायिगोवालो लक्ष्मीशो [4]ललितप्रियः ।
पूर्णो मल्लो वसन्तश्च कङ्कालो लघुशेखरः ॥२०॥

चतुस्तालो [5]गजझम्पो गारुगिश्च चतुर्मुखः ।
गौरीतालो मुकुन्दश्च कुविन्दो भग्नसंज्ञकः ॥२१॥

राजमार्तण्डनामा च वनमाली हरिप्रियः ।
खङ्ग (खड्ग ?) नारायणः [6]सिंहनादो ललित उत्सवः ॥२२॥

हंसो घत्ता[ऽ]न्तरक्रीडो राजनारायणस्ततः ।
निःशङ्कः शार्ङ्गदेवश्च घण्टातालः कलध्वनिः ॥२३॥

श्रीनन्दनश्च जनको राजवङ्कोलनामकः ।
विलोकितो वर्णयतिर्मण्ठा दश च मण्ठिका ॥२४॥

प्रतिमण्ठस्तया झम्पा प्रतितालो नि[:]सारुकः ।
अड्डताली तया ढेङ्कं (ङ्क्ये) कताली वर्णमण्ठिका ॥२५॥

यतिलग्नो भार्गवाङ्कश्चच्चरी कुतुकिप्रियः ।
परिक्रमो झङ्कृतिक उत्तरो डोचिलीति[7] च ॥२६॥

राजराजविलासश्चेत्येवं तालाः समासतः ।
वस्वग्निशर्वरीनाथसंमिताः (१३८) सम्मता [:] सताम् ॥२७॥

---

[1] A. कमलो लयः [2] A. करुणे [3] A. adds विसर्ग
[4] A. F. ललितः प्रियः [5] A. गजज्झम्पो [6] A. सिंहः नादो
[7] S. R. डोम्बुली



अथ लक्ष्मविदां श्रेष्ठो राजराजेश्वरो विभुः ।
यथोद्देशं समाचष्टे लक्षणं लक्ष्मविन्मुदे ॥२८॥

*मात्रैकया [ऽऽ] दितालः स्यात् स रासापरनामकः ॥२९॥
[।] ॥ इत्यादितालः ॥१॥

द्रुतद्वयात् परा मात्रा द्वितीये परिकीर्तिता ।
एनं झम्पाभिधं प्राहुरेके तालविदो जनाः ॥३०॥
[1]॥ ०० [।] ॥ इति द्वितीयः ॥२॥

व्योमत्रयं विरामान्तं तृतीये लक्ष्मगं विदुः ।
॥ ००ὁ[2] ॥ इति तृतीयः ॥३॥

चतुर्थश्चात्र विज्ञेयो लद्वयात् परमे द्रुते ॥३१॥
॥ । । ० ॥ इति चतुर्थः ॥४॥

पञ्चमो दद्वयेन स्यात्, ॥ ०० ॥ इति पञ्चमः ॥५॥
दत्रयं लघुमध्यगम् । सिंहलीलो-, ॥ । ००० । ॥ इति सिंहलीलः ॥६॥

ऽथ सगणो लपौ श्रीरङ्गसंज्ञकः ॥३२॥
॥ । । ऽ । ऽ' ॥ इति श्रीरङ्गः ॥७॥

लगुर्वोर्मध्यगौ[3] द्वौ द्वौ (दौ) वीरविक्रमसंज्ञके ।
॥ ।००ऽ ॥ इति वीरविक्रमः ॥८॥

सविरामं लघुद्वन्द्वं ताले स्याद्धंसलीलके ॥३३॥
॥ । (ि) ि ॥ इति हंसलीलः ॥९॥

लचतुष्कं विरामान्तं गजलीले प्रकीर्तितम् ।
॥ । । । ि ॥ इति गजलीलः ॥१०॥

दद्वयं यगणस्ताले कन्दर्पे तस्य चापरा ॥३४॥
परिक्रमाभिधा ज्ञेया, ॥ ००।ऽऽ ॥ इति कन्दर्पः॥११॥

तथा स्यात् सिंहविक्रमे ।
गुरुत्रयं लपलगाः प्लुतश्च क्रमतो मताः ॥३५॥
॥ ऽ ऽ ऽ । ऽ' । ऽ ऽ' ॥ इति सिंहविक्रमः॥१२॥
[4]लगपा [:] स्युस्त्रिभिन्ने—॥ । ऽ ऽ' ॥ इति त्रिभिन्नः ॥१३॥
ऽयो दर्पणे दद्वयं स्मृतम् । (†)
॥ ०० ॥ इति दर्पणः ॥१४॥

---

* For parallel references of 'Tāla Lakṣaṇas' from S. R. see Appendix to this 'Parīkṣaṇa'.

[1] A. omits this notation.

[2] F. ० (omits ʼ. sign on the third zero).

[3] F. ०गो [4] F. लपगास् † S. R. दर्पणे दद्वयं गश्च; ००ऽ.

घत्वारो रङ्गताले स्यात् (स्यु)र्द्रुता गुरुरतःपरम् ॥३६॥
॥ ० ० ० ० S ॥ इति रङ्गतालः ॥१५॥
प्रत्यङ्गो मगणो लौ द्वौ, ॥ S S S ॥ इति प्रत्यङ्गः ॥१६॥
तगपा रङ्गदीपकः। ॥ S S । S S′ ॥ इति रङ्गदीपः ॥१७॥

लपगा द्विलंगौ पश्च लपौ चेति क्रमादमी ॥३७॥
सिंहविक्रीडिते ज्ञेया, ॥[1] । S′S ।S′S ।SS′ ॥ इति सिंहविक्रीडितः[2] ॥१८॥
हंसनादे पुनस्तथा।
लपौ दौ द्वौ प्लुतो ज्ञेय—॥ ।S′००S′ ॥ इति हंसनादः ॥१९॥

स्तथा तुरगलीलकः।
विरामान्तद्रुतद्वन्द्वाद्द्रुतद्वन्द्वेन कीर्तितः ॥३८॥
॥ ०8०० ॥ ॥ इति तुरगलीलः ॥२०॥
राजताले गपौ दौ द्वौ गौ लपौ चेति (च) क्रमात्[3] स्थिताः।
॥ S S′ ० ० S S । S′ ॥ इति राजतालः ॥२१॥
जला दौ द्वौ प्लुतश्चैव जयो, ॥[4] ।S। ।०० S′ ॥ इति जयः ॥२२॥

[5]वर्णस्त्रिधा यया ॥३९॥
लो दौ लघुद्वयं[6] त्र्यस्रो, ॥ ।००॥[7] ॥ इति त्र्यस्रः [वर्णः] ॥२३॥

मिश्रो द्रुतचतुष्टयी।
पृथक् त्रिधा विरामान्ता पगौ दौ गलगास्ततः ॥४०॥
॥ ०००8०००8०००8S′S००S।S ॥ इति मिश्रो वर्णः[8] ॥२४॥
गलौ द्रुतौ[9] गुरुश्चेति चतुरस्रः प्रकीर्तित.।
॥ S । ० ० S ॥ [इति चतुरस्रवर्णः ॥ २५] ॥ इति त्रिधा वर्णः ॥
दद्वयं लगुरू वर्णभिन्नः प्रोक्तः, ॥ ००।S ॥ इति वर्णभिन्नः ॥२६॥

कुडुक्ककः ॥४१॥
द्रुतद्वन्द्वं[10] लघुद्वन्द्वं भवेत्ताले कुडुक्कके।
॥ ००। । ॥ इति कुडुक्ककः ॥२७॥

---

[1] A. F. wrongly give the sign of प्लुत on the third S instead of the second one. [2] S. R. लपौ गपौ पगौ लाद्गः पलौ पश्च; and । S′ S S′ S′ S । S S′ । S′
[3] A. omits त् [4] A. omits the second sign of द्रुत and A. F. omit the sign of प्लुत on the last S.
[5] A. F. ०स्त्रिवर्णधा [6] F. ०त्रयं
[7] A. omits the last two signs for लघु
[8] F. omits वर्णः [9] F. द्रुतो
[10] F. द्वयं



द्वौ नो दौ लगुरू ताले राजचूडामणौ मताः ॥४२॥
॥ ००।।।००।S ॥ इति राजचूडामणिः॥२८॥
रङ्गोद्योताभिधे ताले मगणो लुप्त (लप्लु)तावपि।
॥ SSS ।S′ ॥ इति रङ्गोद्योतः ॥२९॥

लघू द्रुतचतुष्कं लौ स्यातां शरभलीलके ॥४३॥
॥ ॥००००॥ ॥ इति शरभलीलः ॥३०॥
सगणो गस्त्रिभङ्गिः स्या[1]–॥ ।।S S ॥ इति त्रिभङ्गिः ॥३१॥
न्नगणो लप्लुतावथ।
रङ्गाभरणताले स्तो, ॥ ।।। । S′ ॥ इति रङ्गाभरणः ॥३२॥

रतिलीले तथा पुनः ॥४४॥
लघुगुर्वोः पृथक् (ग्) द्वन्द्व,- ॥ ॥ SS ॥ इति रतिलीलः ॥३३॥
-मथ ताले जयप्रिये।
भगणो दद्वयं प्रोक्तं, ॥ S।। ०० ॥ इति जयप्रियः ॥३४॥

राजविद्याधराभिधे ॥४५॥
लघुर्वक्रो द्रुतौ, ॥ । S ०० ॥ इति राजविद्याधरः ॥३५॥
कीर्तौ, लगपा ललपा इति।[2]
॥ । S S′ । । S′ ॥ इति कीर्तितालः ॥३६॥
जयश्री रगणाल्लो गः, ॥[3] S।S ।S ॥ इति जयश्रीः ॥३७॥

कोकिलाप्रियनाम्नि तु ॥४६॥
गलपाः[4] स्युः, ॥ S । S′ ॥ इति कोकिलाप्रियः ॥३८॥
मङ्गलेऽथो, नद्वयं द्रुतमध्यगम्।
[5]॥ ० ।।। ।।। ० ॥ इति मङ्गलः ॥३९॥
मद्वयं सुन्दरः प्रोक्तो, ॥ SSS SSS ॥ इति सुन्दरः ॥४०॥

द्वन्द्वो सतगणौ प्लुतः ॥४७॥
॥ ।।S SS। S′ ॥ इति द्वन्द्वः ॥४१॥
कलापे सगणः पश्च, [6]॥ ।।S S′ ॥ इति कलापः ॥४२॥
कमले तो दमध्यगः।
॥ ० SS। ० ॥ इति कमलः ॥४३॥

---

[1] A. F. स्यात् [2] S. R. V लपौ गलौ प्लुतः कीर्तिः—। S′ S । S′
[3] F. wrongly adds the sign for लघु in the beginning.
[4] A. omits विसर्ग
[5] A. ।। ।। ० ।।। ० ।।। F. ।। ।। ० ।।। (space blank for one sign) ।।।०
[6] A. F. SS। S′; this notation corresponds to रगण० and प्लुत०, whereas the notation given above is in accordance with the text सगणः पश्च

लये लगौ (गलौ) पत्रयं च गपौ बिन्दुत्रये (यं) तथा ॥४८॥

॥[1] ऽ।ऽ' ऽ' ऽ' ऽ ऽ' ००० ॥ इति लयः ॥४४॥

वल्लभो मगणद्वन्द्वमध्यगे लघुनि स्मृतः ।

॥ ऽऽऽ । ऽऽऽ ॥ इति वल्लभः ॥४५॥

सारसो लघुनो दानां त्रयाल्लद्वयतो भवेत् ॥४९॥

॥ । ००० । । ॥ इति सारसः ॥४६॥

दत्रयं लद्वयं ताले चण्डसंज्ञे प्रकीर्तितः ।

॥ ०००॥ ॥ इति चण्डतालः ॥४७॥

षट्तालसंज्ञके ताले द्रुतषट्कं निरन्तरम् ॥५०॥

॥ ०००००० ॥ इति षट्तालः ॥४८॥

करुणो [2]गुरुणैकेन, ॥ ऽ ॥ इति करुणः ॥४९॥

चतुर्भिर्लघुभिर्गजः ।

धारा[ऽ]प्येव स्मृतो, ॥[3] ॥॥ ॥ इति गजः ॥५०॥

लौ द्वौ(दौ)लपौ वर्धनसंज्ञकः ॥५१॥

॥[4] ॥ ०० । ऽ' ॥ इति वर्धनः ॥५१॥

मल्लिकामोदताले तु लद्वयं दचतुष्टयम् ।

॥ ॥ ०००० ॥ इति मल्लिकामोदः ॥५२॥

सिंहे लदौ लत्रयं च, ॥ । ० ॥। ॥ इति सिंहः ॥५३॥

मगणः पत्रयं लघुः ॥५२॥

ताले चन्द्रकलासंज्ञे, ॥ ऽऽऽ ऽ'ऽ'ऽ' । ॥ इति चन्द्रकला ॥५४॥

रतौ लगुरू स्मृतौ ।

॥ । ऽ ॥ इति रतिः ॥५५॥

[1] F. wrongly adds the sign of प्लुत on the 'Guru' preceded by three प्लुतs.

[2] A. गुरुणैकेन

[3] A. gives six signs for लघु instead of four; F. joins two signs of लघु with a horizontal stroke which is usually (both in A. and F.) an indication for marking out the vertical lines intended to serve as punctuation marks as distinct from the sign for लघु

[4] A.F. join the first two signs for लघु with a horizontal stroke. F. ।।०।-।.



प्रतापशेखरे प्यङ्गाद्विरामान्तद्रुतद्वयम् ॥५३॥

॥[1] ऽ' ० ठ ॥ ॥ इति प्रतापशेखरः ॥५६॥

लीलातालस्तु दलपौ, ॥ ० । ऽ' ॥ इति लीला ॥५६॥

पार्वतीनन्दनः पुनः ।

गलाभ्यां सविरामाभ्यां, ॥[2] ऽ' ।' ॥ इति पार्वतीनन्दनः ॥५७॥

समो(मे) लौ दौ विरामिणौ ॥५४॥

॥[3] । । ठठ ॥ इति समः ॥५८॥

गद्वयं लद्वयं ताले श्रीकीर्तौ समुदाहृतम् ।

॥ ऽऽ ॥ ॥ इति श्रीकीर्तिः ॥५९॥

बिन्दुमाली गुरुद्वन्द्वमध्यगे दचतुष्टये ॥५५॥

॥ ऽ ०००० ऽ ॥ इति बिन्दुमाली ॥६०॥

पगपा लघुसंयुक्ता विजये, ॥ ऽ' ऽ ऽ' [।] ॥ इति विजयः ॥६१॥

जयमङ्गले । सगणद्वितयं,

॥ ॥ऽ ॥ऽ ॥ इति जयमङ्गलः ॥६२॥

दौ द्वौ गुरुश्च मदनाभिधे ॥५६॥ ०० ऽ ॥ इति मदनः ॥६३॥

लद्वयं गत्रयं ताले विजयानन्दसंज्ञके ।

॥ ॥ ऽऽऽ ॥ इति विजयानन्दनः ॥६४॥

मकरन्दे द्रुतद्वन्द्वं लघुत्रयमथो गुरुः ॥५७॥

॥ ००॥। ऽ ॥ इति मकरन्दः ॥६५॥

उदीक्षणे लद्वयं [4]च गुरुरेकः क्रमादिमे ।

॥ ॥ ऽ ॥ इति उदीक्षणः ॥६६॥

लगपा दौ लगौ पश्च रूपनारायणाह्वये ॥५८॥

॥ ।-। (।) ऽऽ' ०० । ऽ ऽ' ॥ इति रूपनारायणः ॥६७॥

दलगाः क्रमतो राजमृगाङ्के राजसंमताः ।

॥[5] ० । ऽ ॥ इति राजमृगाङ्कः ॥६८॥

तगणः पलगा दौ द्वौ गुरू लः पलपा गुरुः ॥५९॥

लघु (लघू) चतुष्टयी गानां निःशब्दां(ब्दा)सिंहनन्दने ।

॥ ऽऽ । ऽ' । ऽ' (ऽ) ०० ऽऽ । ऽ' । ऽ' ऽ ॥ [6]॥इति सिंहनन्दनः ॥६९॥

[1] A. F. give two signs of द्रुत before विराम instead of one.

[2] A ऽ' ।, F. ऽ' ॥।.

[3] A. F. give the sign of विराम only on the second sign for द्रुत as ० ठ.

[4] F. omits च

[5] F. ० । ऽऽ.

[6] F. adds the sign for प्लुत on the last 'Guru'. S. R. adds the figure ४ at the end to indicate the four silent 'Gurus'.

क्रीडा दौ द्वौ विरामान्तौ चण्डनिःसारुकश्च सः ॥६०॥

॥[1] ꝺꝺ ॥ इति क्रीडातालः [चण्डनिःसारुश्च] ॥७०॥

ताले सरस्वतीकण्ठाभरणे गौ लघू द्रुतौ ।

॥ ऽऽ ०० ॥ इति सरस्वतीकण्ठाभरणः ॥७१॥

द्रुतद्वयं विरामान्तदप्लुतौ रागवर्धने ॥६१॥

॥ ० ꝺ ० ऽ′ [2] ॥ इति रागवर्धनः ॥७२॥

नन्दनो लपयोर्मध्ये दद्वयेन प्रकीर्तितः ।

॥ । ०० ऽ′ ॥ इति नन्दनः ॥७३॥

गुर्वोर्मध्ये दद्वयेन केषांचन मते मतः ॥६२॥

॥[3] ऽ ०० ऽ ॥ इति वा नन्दनः ॥७३॥

लौ द्रुतौ [4]लः प्लुतश्चान्ते, ॥ ॥ ०० । ऽ′ ॥ इति वा नन्दनः ॥७३॥

द्विविरामावसाना स्यात् । विषमे दचतुष्टयी,

॥[5] ०००ꝺ ०००ꝺ ॥ इति विषमः ॥७४॥

लो दौ लघू गुरू नान्दी ॥६३॥ ॥[6] ।००॥ ऽऽ ॥ इति नान्दी ॥७५॥

पार्वतीलोचनः पुनः, लौ दौ लौ[7] दौ तनभका ।

॥ ॥ ०० ॥ ०० ऽऽ। ॥। ऽ॥ ॥

अयवा मगणो लदौ, गुरू द्रुता-, ॥ ऽऽऽ । ०० ऽऽ[8]०० ॥

[8]वथ मलौ ॥६४॥ पगौ लौ दाविति स्मृतः,

॥ ऽऽऽ । ऽ′ ऽ॥ ०० ॥ मलपा द्वौ गुरू दौ द्वौ । पार्वतीलोचनोऽथवा,

॥ ऽऽऽ । ऽ′ ऽऽ ०० ॥ इति पार्वतीलोचनः ॥७६॥

लुप्तो (प्लुतो) गुरुत्रयं लौ दौ ॥६५॥ हरः, ॥ ऽ′ ऽऽऽ ॥ ०० ॥ इति हरः ॥७७॥

स्कन्दोऽथ रो[9] द्रुतौ, गुरू चेति प्रकीर्तितः ।

॥ ऽ । ऽ ०० ऽऽ ॥ इति स्कन्दः ॥७८॥

अभिनन्दे लघू दौ द्वौ गुरुरेकः स्मृतो बुधैः ॥६६॥

॥ ॥ ०० ऽ ॥ इत्यभिनन्दः ॥७९॥

---

[1] A. F. ॥ ००  [2] F. omits the sign of प्लुत at the end.

[3] A. F. add one sign for लघु in the beginning.

[4] A. F. लुप्तवश्चांते (F. looks like ० तश्चांते)

[5] A. F. add two vertical lines in between the two groups of four 'Drutas' each; perhaps, in order to make the two groups distinct.

[6] A. ।-। ०० । ऽऽ; F. ॥ ००० । ऽऽ

[7] F. लो  [8] F. ०कथ  [9] F. रा



लो दौ ल(लो)गौ च कुमुदो-,[1] ॥ । ०० । ऽऽ ॥ इति कुमुदः ॥८०॥

ऽथवा लौ दौ द्रुतौ गुरुः ।

॥[2] ॥ ०००० ऽ ॥ इति वा कुमुदः ॥८०॥

प्रत्येकं दलगा द्विः स्याद्[3] दीपकः, ॥ ०० ॥ ऽऽ ॥ इति दीपकः ॥८१॥

कन्दुकोऽपि च ॥६७॥ लाद्येन सगणेनोक्तो-,

॥[4] । ॥ऽ ॥ इति कन्दुकः ॥८२॥

ऽभङ्गो लपशरीरवान् । ॥ । ऽ′ ॥ इति अभङ्गः ॥८३॥

रगणो द्रावर्धमात्रौ गायिगोवालनामकः ॥६८॥

॥ ऽ । ऽ ०० ॥ इति [गायि-] गोवालनामकः ॥८४॥

द्रुतद्वयं विरामान्तं लौपी (पो) लक्ष्मीशसंज्ञकः ।

॥ ० ꝺ ॥ ऽ′ ॥ इति लक्ष्मीशः ॥८५॥

ललितप्रियताले स्यात् सगणानन्तरौ लगौ ॥६९॥

॥ ॥ऽ । ऽ ॥ इति ललितप्रियः ॥८६॥

एकाद्येकान्ततो वृद्धिह्रासाभ्यां क्रमतो द्रुतैः ।

बीजपूराकृतिधरैः पञ्चविंशतिसंख्यकैः ॥७०॥

पूर्णतालः समादिष्टः पूर्णविश्वम्भराभृता । ॥ इति पूर्णतालः ॥८७॥

[5]



मल्लतालेऽब्धिलघवो विरामान्तद्रुतद्वयो ॥७१॥

॥ ॥॥ ० ꝺ ॥ इति मल्लतालः ॥८८॥

नमौ वसन्ततालः स्यात्, ॥ ॥। ऽऽऽ ॥ इति वसन्तः ॥८९॥

कङ्कालोऽथ चतुर्विधः ।

पूर्णश्च खंडसंज्ञश्च समश्चैवासमस्तथा ॥७२॥

---

[1] S. R. कुमुदो लाद् द्रुतौ लौ गश्च । ०० ॥ ऽ

[2] S. R. लश्चतुर्द्रुती, अन्हे गुरुश्च कुमुदः । ०००० ऽ.  [3] F. omits द्

[4] A. F. । ऽ । ऽ which corresponds to ल+रगण (and not सगण as given in the text). S. R. कन्दुको लौ च सगणः—॥ ॥ऽ.

[5] F. leaves space blank on the left hand side for this diagram.

पूर्णो द्रुतचतुष्केण गुरुणा लघुना तथा ।

॥ ०००० ऽ । ॥१॥ इति पूर्णः ॥

द्रुतद्वयं गुरू खण्डे, ॥ ०० ऽऽ ॥२॥ इति खण्डः ॥

द्वौ गुरू सलघू समे ॥७३॥

॥ ऽऽ ॥ ॥३॥ इति समः ॥

असमे लो गुरुद्वन्द्वं, ॥ । ऽ ऽ ॥४॥ इति असमः ॥

कङ्कालोऽयं चतुर्विधः ।

॥ इति चतुर्धा कङ्कालः ॥९०॥

सविरामेण लघुना तालः स्याल्लघुशेखरः ॥७४॥

केचित्तालविदो रासममुमेव प्रचक्षते ।

॥ [1]।́ ॥ इति लघुशेखरः ॥९१॥

चतुस्ताले गुरुः पूर्वं ततो दानां त्रयं मतम् ॥७५॥

॥ ऽ ००० ॥ इति चतुस्तालः ॥९२॥

जग(गज)झम्पे गुरोरग्रे विरामान्ता द्रुतत्रयी ।

॥ ऽ ०० $\delta$ ॥ इति जग(गज)झम्पः ॥९३॥

गारुगौ सविरामा स्याल्लिपौ द्रुतचतुष्टयी ॥७६॥

॥ ०००$\delta$ ॥ इति गारुगिः ॥९४॥

चतुर्मुखो जगणतः प्लुतेन परिकीर्तितः ।
अयमेव हि तालज्ञैर्मातृकः संप्रचक्षते ॥७७॥

॥[2] ।ऽ। ऽ́ ॥ इति चतुर्मुखः ॥९५॥

ऋजुभिः पञ्चभिः प्रोक्तो गौरीतालः पुरातनैः ।

[3]॥ ।।।। ॥ इति गौरीतालः ॥९६॥

मुकुन्दे लगयोर्मध्ये कथिता दचतुष्टयी ॥७८॥

॥ । ०००० ऽ ॥

लदला गौथ(च)वा कैश्चिदुक्तोऽयं तालवेदिभिः ।

॥ । ० । ऽऽ ॥ इति मुकुन्दः ॥९७॥

लो दौ गपौ कुविन्दः स्यात्(द्),

॥ । ०० ऽ ऽ́ ॥ इति कुविन्दः ॥९८॥

भग्नतालस्तथा पुनः ॥७९॥

---

[1] F. । (omits the sign for विराम)

[2] A. F. ऽ। ऽ। ऽ́ (F adds । at the end).

[3] F. omits this notation.



चतुर्द्रुती लत्रयेण सविरामेण संयुता ।

॥ ०००० ॥।́ ॥ इति भग्नः ॥९९॥

राजमार्तण्डताले स्युः क्रमेण गलघुद्रुताः ॥८०॥

॥ ऽ । ० ॥ इति राजमार्तण्डः ॥१००॥

चतुर्द्रुती लघुर्दौ द्वौ गुरुश्च वनमालिनि ।

॥ ०००० । ००ऽ ॥ इति वनमाली ॥१०१॥

पृथक् त्रिस्त्रिर्दलगपास्ताले प्रोक्ता हरिप्रिये ॥८१॥

॥ ००० ।।। ऽऽऽ ऽ́ऽ́ऽ́ ॥ इति हरिप्रियः ॥१०२॥

दद्वयाज्जगणो वक्रः षड्ग(खड्ग ? ) नारायणो मतः ।

॥ ०० ।ऽ। ऽ ॥ इति षड्ग(खड्ग)नारायणः ॥१०३॥

यगणो लगुरू सिंहनादताले प्रकीर्तितौ ॥८२॥

॥ ।ऽऽ । ऽ ॥ इति सिंहनादः ॥१०४॥

ताले ललितसंज्ञे स्यात्(द्)द्रुतद्वन्द्वं लघुर्गुरुः ।

॥ ०० । ऽ ॥ इति ललितः ॥१०५॥

लप्लुतावुत्सवे प्रोक्तौ, ॥ । ऽ́ ॥ इत्युत्सवः ॥१०६॥

हंसे सविरती लघू ॥८३॥

॥ ।।́ ॥ इति हंसः ॥१०७॥

द्वौ लौ द्वौ द्वौ (दौ) लगौ घत्ता, ॥ ॥ ०० । ऽ ॥ इति घत्ता ॥१०८॥

विरामान्ता द्रुतत्रयी ।

भवत्यत्रान्तरक्रीडः, ॥ ००० ($\delta$) ॥ इत्यन्तरक्रीडः ॥१०९॥

दद्वयं जगणो गुरुः ॥८४॥

राजनारायणे ताले, ॥ ०० ।ऽ। ऽ ॥ इति राजनारायणः ॥११०॥

ताले निःशङ्कसंज्ञके ।

लगपा गौ लघुर्ज्ञेया, ॥ । ऽ ऽ́ ऽऽ । ॥ इति निःशङ्कः ॥१११॥

शार्ङ्गदेवाभिधे पुनः ॥८५॥

दद्वयं गपगा गश्च लघुश्चेति क्रमादमी ।

॥ ०० ऽ ऽ́ ऽ ऽ । ॥ इति शार्ङ्गदेवः ॥११२॥

द्वौ द्वौ दौ लौ गपौ घण्टा, ॥ ०० ॥ ऽऽ (ऽ́) ॥ इति घण्टा ॥११३॥

सलपा स्यात् कलध्वनिः ॥८६॥

॥ ।।ऽ । ऽ́ ॥ इति कलध्वनिः ॥११४॥

भपौ श्रीनन्दने प्रोक्तौ, ॥ ऽ।। ऽ́ ॥ इति श्रीनन्दनः ॥११५॥

जनके नयसा गुरुः ।

॥ ।।। ।ऽऽ ।।ऽ ऽ ॥ इति जनकः ॥११६॥

रगणाद्बिन्दुयुग्मेन राजवङ्कोल इष्यते ॥८७॥
॥ [1]ऽ।ऽ ०० ॥ इति राजवङ्कोलः ॥११७॥

विलोकिते गुरुदौं द्वौ गुरुश्चेति, तथा पुनः ।
॥ ऽ ०० ऽ ॥ इति विलोकितः ॥११८॥

वर्णयत्यभिधे ताले लघुद्वन्द्वं द्रुतद्वयम् ॥८८॥
॥ ॥ ०० ॥ इति वर्णयतिः ॥११९॥

मण्ठे सगणतः शब्दरहिता लचतुष्टयी ।
॥ ।।ऽ [४] ॥१॥ इति मण्ठः ॥

भगणाद्भगणौ[2] शब्दरहितौ वान्यमण्ठके ॥८९॥
॥ ऽ।। ऽ।। ऽ।। ॥२॥ इत्यन्यो मण्ठः ॥

मुद्रिते भगणात्तद्वन्निःशब्दं लचतुष्टयम् ।
॥ ऽ।। ।̇ ।̇ ।̇ ।̇[3] ॥३॥ इति मुद्रितमण्ठः ॥

तथैवापरमण्ठे स्यान्नगणाद्यगणो लघुः ॥९०॥
॥ ।।। ।ऽऽ । ॥४॥ इत्यपरो मण्ठः ॥

जयप्रियाभिधो मण्ठो जगणेनेह कीर्तितः ।
॥ ।ऽ। ॥५॥ इति जयप्रियमण्ठः ॥

मङ्गलो भेन, ॥ ऽ।। ॥६॥ इति मङ्गलः [मण्ठः] ॥

सेन स्यात्, सुन्दरो, ॥ ।।ऽ ॥
॥७॥ इति सुन्दरः [मण्ठः] ॥

वल्लभो रतः ॥९१॥ ॥ ऽ।ऽ ॥८॥ इति वल्लभः [मण्ठः] ॥

कलापो नगणेन स्यात् सविरामेण तस्य च ।
प्रतिमण्ठाभिधा कैश्चिदुच्यते तालवेदिभिः ॥९२॥
॥ ।।ſ ॥९॥ इति कलापः [मण्ठः]

सविरामं द्रुतद्वन्द्वं लघुश्च कमले भवेत् ।
॥ ०ȯ । ॥१०॥ इति कमलः [मण्ठः]
॥ इति दशविधो मण्ठः ॥१२०॥

---

[1] F. omits the first 'Guru',

[2] S. R. यद्वा भाद् द्वावशब्दकौ (mentions two अशब्द० लघुs after भगण०) and ऽ।। २. Our text can be reconstructed as भगणाच्च लौ द्वौ शब्दरहितौ वान्यमण्ठके and ऽ।। २; this reading will be better also in view of the reading of the succeeding verse.

[3] The practice of giving dots at the top in order to indicate निःशब्दक्रिया appears only at this place in A. and F. for the first time.



गवर्पैर्मण्ठिकैका स्यात् (द्), ॥ ऽ ० ऽ́ ॥१॥ इत्येकमण्ठिका ॥१२१॥
द्वितीया च तथा पुनः ॥९३॥

विरामाविद्युग्मान्तं लद्वयं चेति केचन ।
॥[1] ।। ० ȯ (।। ȯ ०) ॥२॥ इत्यपरा मण्ठिका ॥१२१॥

सगणो भगणो वापि प्रतिमण्ठे प्रकीर्तितः ॥९४॥

तालज्ञैरयमेवान्यैर्मल्लकोऽयं[2] (थ) निरूप्यते ।
॥ ।।ऽ [ऽ]॥ ॥१॥ इति प्रतिमण्ठः ॥१२२॥
प्रतिमण्ठोऽथवा मेन लप्लुताभ्यां युतेन च ॥९५॥
॥ ऽऽऽ । ऽ́ ॥२॥ इति वा प्रतिमण्ठः ॥१२२॥

झम्पाताले विरामान्ता दद्वयी लघुनाञ्चिता ।
॥[3] ० ȯ । ॥ इति झम्पातालः ॥१२३॥

प्रतितालो [4]लघोर्दौं द्वौ, ॥ । ०० ॥ इति प्रतितालः ॥१२४॥
ताले निःसारुकाभिधे ॥९६॥

सविरामं लघुद्वन्द्वम्, ॥ [5]।ſ ॥ इति निःसारुकः ॥१२५॥
अड्डताली तथा पुनः । द्रुतादूर्ध्वलघुद्वय्या,
कैश्चित् त्रिपुट ईर्यते ॥९७॥[6] ०।। ॥ इत्यड्डताली ॥१२६॥

योजना[ऽ]परनामा(म्नी)स्यात् (द्) ढेङ्किका रगणात्मिका
॥ ऽ।ऽ ॥ इति ढेङ्किका ॥१२७॥

एकताली द्रुते(तैं)केन, ॥ ० ॥ इत्येकताली ॥१२८॥
लद्वयं दद्वयं लघुः ॥९८॥ द्रुतद्वयं च विज्ञेयं,
वर्णमण्ठिकिकाभिधे । ॥ ॥ ०० । ०० ॥ इति वर्णमण्ठिका ॥१२९॥
दलाभ्यां यतिलग्नोऽसौ,
रूपकः कैश्चिदिष्यते ॥९९॥ ॥ ० । ॥ इति यतिलग्नः ॥१३०॥

पताभ्यां भार्गवाङ्कः स्यात्,
॥ ऽ́ ऽऽ। ॥ इति भार्गवाङ्कः ॥१३१॥

---

[1] S. R. ।। ȯ ȯ; but actually ।। ȯ ० would be in accordance with the text reading as विरामादि० (which is found also in S. R.).

[2] F. ०र्मल्लिको० S. R. कोल्लटः

[3] F. omits the sign of विराम on the second zero.

[4] F. omits लघो०

[5] A. ।। (omits the sign of विराम on the second लघु).

[6] F. adds two extra sings for लघु in the beginning.

चञ्चरी लघुकान्तगैः । विरामान्तैर्द्रुतद्वन्द्वैः,
अष्टभिः परिकीर्तिता ॥१००॥ ०δ ०δ ०δ ०δ ०δ ०δ ०δ ०δ । ॥
॥ इति चञ्चरी ॥१३२॥

चतुर्द्वन्द्वी तु लदयोः,
ताले स्यात् कुतुकिप्रिये । ॥ । ० । ० । ० । ० ॥ इति कुतुकिप्रियः ॥१३३॥
परिक्रमाभिधे ताले दद्वयाद्यगणो भवेत् ॥१०१॥
॥ ०० ।ऽऽ ॥ इति परिक्रमः ॥१३४॥

लपाभ्यां झंकृतिः प्रोक्तः,
॥ । ऽ′ ॥ इति झङ्कृतिः ॥१३५॥
सविरामद्रुतैककः ॥१०२॥ उत्तरः, ॥[१] δ ॥ इत्युत्तरः ॥१३६॥

डोचिलीतालो,
बुधैर्बद्धायनः स्मृतः । पृथक्(ग्) लघुद्वयी तत्र,
सविरामा मता यथा ॥
॥[२] f f ॥ इति बद्धायनः [डोचिली] ॥१३७॥
द्विःकृत्वो दलगपै[श्च]राजराजविलासकः ॥१०३॥
॥ ०।ऽऽ′ ०।ऽऽ′ ॥ इति राजराजविलासः ॥१३८॥

वसुवह्नीन्दुसंख्याकास्ताला[१३८]एवमिहोदिताः ।
[३]अन्येऽपि बहवः सन्ति ताला एकद्रुतादितः ॥१०४॥

अगण्यद्रुतविस्तारप्रस्तारे लक्ष्मवर्त्मनि ।
न दृश्यन्ते तथा केचित् पौनरुक्त्यान्न संमताः ॥१०५॥

पथा/

इत्येतावत एवोक्ता मया[ऽ]नेन यथा बुधैः ।
स्वरुचेरूहनीयास्ते यथाशोभं यथारसम् ॥१०६॥

यतिपर्यायतः प्रोक्ता धरिण्यो देशिकोविदैः ।
आवृत्तयस्तु मार्गज्ञैस्तालानां परिभाषिताः ॥१०७॥

परिवर्तनसंज्ञाभिस्ता [४]वाक्यपदगोचराः ।
धरण्यः पदमध्येऽन्ते भवेयुस्तालनिर्णयात् ॥१०८॥ ॥ इति धरण्यः ॥

देशे देशे यस्य कीर्तिरुत्ताला गीयते जनैः ।
देशीतालाः [५]समादिष्टास्तेन राज्ञा प्रपञ्चतः ॥१०९॥

इति श्रीमहाराजाधिराजश्रीकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे घनोल्लासे देशीतालपरीक्षणं द्वितीयं समाप्तम् ॥

---

[१] A. । (omits the sign for विराम)
[२] A. ॥, F. । f, S. R. f f.
[३] cf. S. R. V 312
[४] F. वाक्यद (omits प)
[५] F. समुदिष्टा०



## APPENDIX

### *(1) Critical Note on the Notation of 'Deśī Tālas'.*

The following points are notable in connection with the notation of Deśī Tālas in the foregoing Parīkṣaṇa :—

(a) MSS. A and F give a slanting stroke (from left to right) both for विराम० and प्लुत०. We have given ˅ sign for 'Virāma' in order to distinguish it from 'Pluta' and a slanting stroke (from right to left) for 'Pluta'.

(b) There is sometimes a confusion in the notation and 'Lakṣaṇa' with regard to सविराम० and विरामान्त०. In such cases, reconstruction has been made after comparison with S. R.

(c) There is much confusion in A. and F. MSS. regarding ॥ sign which stands both as a punctuation mark and as a part of the notation for Tālas. Reconstruction of these portions has been done in accordance with Lakṣaṇas and the confused MS. readings have generally not been noticed. In our reconstructed notation ॥ standing as a punctuation mark has been separated from the notation by giving unusual space in-between.

### *(2) Comparison with S. R.*

A comparison of the treatment of Deśī Tālas in S. Raj. with that in S. R. is attempted in the enclosed table, which reveals the following points :—

(a) The number of Tālas found both in S. Raj. and S. R. is 119. There are 19 Tālas in S. Raj. which are not found in S. R. On the other hand, there is one Tāla in S. R. (अनङ्ग० S. R. V 288) which is not found in S. Raj. This explains the difference in the total number of Tālas in the two texts viz. 138 in S. Raj. and 120 in S. R.

(b) There is a marked difference in the serial order of Tālas in the two texts.

(c) In some cases, the Lakṣaṇas of Tālas or their notation differ in the two texts. These differences have been indicated in the 'Remarks' column in the following table. In cases of perfect agreement no remarks have been given.

## *Comparative Statement of 'Deśī Tāla-Lakṣaṇas' in S. Raj. and S. R.*

| S. Raj. III 3. 2. Serial No. | Śloka No. | Name of Tāla | S. R. Chap. V Serial No. | Śloka No. | Name of Tāla | Remarks. |
|---|---|---|---|---|---|---|
| १ | २९ | आदितालः | १ | २६१ | आदितालः | |
| २ | ३० | द्वितीयः | २ | २६१ | द्वितीयकः | |
| ३ | ३० | तृतीयः | ३ | २६१ | तृतीयः | |
| ४ | ३१ | चतुर्थः | ४ | २६१--२६२ | चतुर्थकः | |
| ५ | ३२ | पञ्चमः | ५ | २६२ | पञ्चमः | |
| ६ | ३२ | सिंहलीलः | १० | २६४ | सिंहलीलः | S. R. लघ्वन्ते(न्तं)दत्रयम् ०००। |
| ७ | ३२ | श्रीरंगः | १४ | २६६ | श्रीरंगः | |
| ८ | ३३ | वीरविक्रमः | १२ | २६५ | वीरविक्रमः | S. R. विरामान्तं लघुद्वयम् ॉॉ |
| ९ | ३३ | हंसलीलः | १९ | २६७ | हंसलीलः | |
| १० | ३४ | गजलीलः | १८ | २६७ | गजलीलः | |
| ११ | ३४ | कन्दर्पः | ११ | २६४ | कन्दर्पः | |
| १२ | ३५ | सिंहविक्रमः | ८ | २६३ | सिंहविक्रमः | |
| १३ | ३६ | त्रिभिन्नः | २१ | २६८ | त्रिभिन्नः | |
| १४ | ३६ | वर्पणः | ७ | २६३ | वर्पणः | S. R. दर्पणे दद्वयं गश्च ००ऽ |
| १५ | ३६ | रंगतालः | १३ | २६५ | रंगः | |
| १६ | ३७ | प्रत्यङ्गः | १६ | २६६ | प्रत्यङ्गः | |
| १७ | ३७ | रंगदीपः | २४ | २६९ | रङ्गप्रदीपकः | |
| १८ | ३७ | सिंहविक्रीडितः | २७ | २७२ | सिंहविक्रीडितः | S. R. लपौ गपौ पगौ लाद्गः पलौ पश्च ।ऽ' ऽऽ' ऽ' ऽ।ऽ' ऽ' ।ऽ' |
| १९ | ३८ | हंसनादः | ३० | २७३ | हंसनादः | |
| २० | ३८ | तुरङ्गलीलः | ३३ | २७४ | तुरङ्गलीलः | The 'Lakṣaṇas' agree in S. R. and S. Raj. but there is a difference in notation—S.R. 8 8 ० ०, S. Raj. ० 8 ० ० |
| २१ | ३९ | राजतालः | २५ | २६९ | राजतालः | S. R. राजताले गपौ दौ च गलौ प्लुतः ऽऽ' ० ० ऽ।ऽ' |
| २२ | ३९ | जयः | २८ | २७२ | जयः | |
| २३ | ४० | त्र्यश्रः | २६ | २७० | त्र्यश्रवर्णः | S. R. लौ दौ लघुद्वयम् ।।००।। |
| २४ | ४० | मिश्रवर्णः | २६ | २७० | मिश्रवर्णः | |
| २५ | ४१ | चतुरस्रः | २६ | २७१ | चतुरश्रवर्णः | |
| २६ | ४१ | वर्णभिन्नः | २० | २६८ | वर्णभिन्नः | |
| २७ | ४२ | कुडुक्ककः | ३२ | २७४ | कुडुक्कः | |
| २८ | ४२ | राजचूडामणिः | २२ | २६८ | राजचूडामणिः | |
| २९ | ४३ | रङ्गोद्योतः | २३ | २६९ | रङ्गोद्योतः | |
| ३० | ४३ | शरभलीलः | ३४ | २७४–२७५ | शरभलीलः | |
| ३१ | ४४ | त्रिभङ्गिः | ३६ | २७६ | त्रिभङ्गिः | |
| ३२ | ४४ | रङ्गाभरणः | ३७ | २७६ | रङ्गाभरणः | S. R. ताल्लप्लुतौ—ऽऽ।।ऽ' |
| ३३ | ४५ | रतिलीलः | ९ | २६३ | रतिलीलः | |
| ३४ | ४५ | जयप्रियः | | | × | |
| ३५ | ४६ | राजविद्याधरः | ४१ | २७९ | राजविद्याधरः | |
| ३६ | ४६ | कीर्त्तितालः | ४८ | २८२ | कीर्त्तितालः | S. R. लपौ गलौ प्लुतः कीर्तिः ।ऽ' ऽ।ऽ' |
| ३७ | ४६ | जयश्रीः | ४६ | २८२ | जयश्रीः | |
| ३८ | ४६, ४७ | कोकिलाप्रियः | ३९ | २७८–२७९ | कोकिलाप्रियः | |
| ३९ | ४७ | मंगलः | | | × | |
| ४० | ४७ | सुन्दरः | | | × | |

| S. Raj III 3. 2. | | | S. R. Chap. V | | | |
|---|---|---|---|---|---|---|
| Serial No. | Śloka No. | Name of Tāla | Serial No. | Śloka No. | Name of Tāla | Remarks. |
| ४१ | ४८ | द्वन्द्वः | ११० | ३०६ | द्वन्द्वः | |
| ४२ | ४८ | कलापः | | | × | |
| ४३ | ४८ | कमलः | | | × | |
| ४४ | ४८ | लयः | १०६ | ३०५ | लयः | Slight difference—S. R. गलौ S. Raj. लगौ। |
| | | | | | × | |
| ४५ | ४९ | वल्लभः | | | | |
| ४६ | ४९ | सारसः | १०३ | ३०३ | सारसः | |
| ४७ | ५० | चण्डतालः | १०४ | ३०४ | चण्डतालः | |
| ४८ | ५० | षट्तालः | ९४ | १०३ | षट्तालः | |
| ४९ | ५१ | करुणः | १०२ | ३०३ | करुणः | |
| ५० | ५१ | गजः | ९९ | ३०२ | गजः | |
| ५१ | ५१ | वर्द्धनः | ९२ | ३०० | वर्द्धनः | S. R. द्वौ द्रुतौ लपौ ००।ऽ′ |
| ५२ | ५२ | मल्लिकामोदः | ४३ | २८० | मल्लिकामोदः | |
| ५३ | ५२ | सिंहः | १०१ | ३०३ | सिंहः | |
| ५४ | ५३ | चन्द्रकला | १०५ | ३०४ | चन्द्रकला | |
| ५५ | ५३ | रतिः | ८२ | २९६ | रतितालः | |
| ५६ | ५३ | प्रतापशेखरः | ७५ | २९३ | प्रतापशेखरः | S. R. दीप्तादिविरामान्तं द्रुतद्वयम्—ऽ०ऽ (दीप्त–should stand for ऽ′) |
| ५७ | ५४ | लीला | ८३ | २९७ | लीलातालः | |
| ५८ | ५४ | पार्वतीनन्दनः | | | × | |
| ५९ | ५४ | समः | ५३ | २८४ | समः | |
| ६० | ५५ | श्रीकीर्त्तिः | ४९ | २८२ | श्रीकीर्त्तिः | |
| ६१ | ५५ | बिन्दुमाली | ५२ | २८३ | बिन्दुमाली | |
| ६२ | ५६ | विजयः | ५१ | २८३ | विजयः | |
| ६३ | ५६ | जयमंगलः | ४२ | २८० | जयमंगलः | |
| ६४ | ५६ | मदनः | ७९ | २९५ | मदनः | |
| ६५ | ५७ | विजयानन्दनः | ४४ | २८१ | विजयानन्दः | |
| ६६ | ५७ | मकरन्दः | ४७ | २८२ | मकरन्दः | |
| ६७ | ५८ | उदीक्षणः | ५७ | २८५ | उदीक्षणः | |
| ६८ | ५८ | रूपनारायणः | | | × | |
| ६९ | ५९ | राजमृगाङ्कः | ११७ | ३१० | राजमृगाङ्कः | S. R. द्रुतौ लघुरथो गुरुः (००।ऽ) |
| ७० | ६० | सिंहनन्दनः | ३५ | २७५–२७६ | सिंहनन्दनः | |
| ७१ | ६० | क्रीडातालः (चण्डनिःसारुश्च) | ४५ | २८१ | क्रीडातालः (चण्डनिःसारुकश्च) | |
| ७२ | ६१ | सरस्वतीकण्ठाभरणः | ११५ | ३०८ | सरस्वतीकण्ठाभरणः | The notation in S. R. does not accord with the respective 'Lakṣaṇa.' द्वौ गुरु द्वौ लघुप्लुतौ ऽऽ।।०० |
| ७३ | ६१ | रागवर्द्धनः | ९३ | ३०० | रागवर्द्धनः | |
| ७४ | ६२ | नन्दनः | ५४ | २८४ | नन्दनः | Three alternative 'Lakṣaṇas' in S. Raj.; S. R. agrees with the first. |
| ७५ | ६३ | विषमः | ५९ | २८६ | विषमः | |
| ७६ | ६३ | नान्दी | ६३ | २८८ | नान्दी | |
| ७७ | ६४-६५ | पार्वतीलोचनः (चत्वारो भेदाः) | ८१ | २९६ | पार्वतीलोचनः (एकभेदः) | The notation in S. R. does not accord with the Lakṣaṇa—गलपा द्वौ गुरू दौ द्वौ–ऽऽऽ।ऽ′ऽऽ००; S. Raj., gives four alternatives; the last one of these agrees with the notation of S. R. |
| ७८ | ६५ | हरः | | | × | |
| ७९ | ६६ | स्कन्दः | १०७ | ३०५ | स्कन्दः | |

| S. Raj III 3. 2. | | | S. R. Chap. V | | | |
|---|---|---|---|---|---|---|
| Serial No. | Śloka No. | Name of Tāla | Serial No. | Śloka No. | Name of Tāla | Remarks. |
| ८० | ६६ | अभिनन्दः | ६१ | २८७ | अभिनन्दः | |
| ८१ | ६७ | कुमुदः (द्वौ भेदौ) | ६८ | २९१ | कुमुदः (द्वौ भेदौ) | S. R. १) लाद् द्रुतौ लौ गश्च–(१००।।ऽ)<br>२) लश्चतुर्द्रुती, अन्ते गुरुश्च–(१०००ऽ) |
| ८२ | ६७ | दीपकः | ५६ | २८५ | दीपकः | |
| ८३ | ६८ | कन्दुकः | ६६ | २९० | कन्दुकः | S. R. लौ च सगणः ।। ।।ऽ |
| ८४ | ६८ | अभङ्गः | ७१ | २९२ | अभङ्गः | |
| ८५ | ६८ | गायि-गोवालः | | | × | |
| ८६ | ६९ | लक्ष्मीशः | ८८ | २९९ | लक्ष्मीशः | S. R. द्रुतद्वयं विरामान्तं लप्लुतौ च–(०ऽ।ऽ') |
| ८७ | ६९ | ललितप्रियः | ८९ | २९९ | ललितप्रियः | The notation is identical, but 'Lakṣaṇas' differ only verbally. S. R. ऊर्ध्वं लघुभ्यां रगणः (।।ऽ।ऽ) S. Raj. सगणानन्तरौ लगौ (।।ऽ।ऽ) |
| ८८ | ७०-७१ | पूर्णतालः | | | × | |
| ८९ | ७१ | मल्लतालः | ६४ | २८८ | मल्लतालः | |
| ९० | ७२ | वसन्तः | ७३ | २९३ | वसन्तः | |
| ९१ | ७३–७४ | कङ्कालश्चतुर्विधः | ६५ | २८९–२९० | कङ्कालश्चतुर्विधः | |
| ,, | ,, | (१) पूर्णः | ,, | ,, | (१) पूर्णः | |
| ,, | ,, | (२) खण्डः | ,, | ,, | (२) खण्डः | |
| ,, | ,, | (३) समः | ,, | ,, | (३) समः | S. R. समौ गुरू द्वौ लघ्वन्ते—ऽऽ। |
| ,, | ,, | (४) असमः | ,, | ,, | (४) विषमः | |
| ९२ | ७४ | लघुशेखरः | ७४ | २९३ | लघुशेखरः | |
| ९३ | ७५ | चतुस्तालः | ६९ | २९१–२९२ | चतुस्तालः | |
| ९४ | ७६ | जग (गज) झंपा | ७७ | २९४ | गजझंपः | |
| ९५ | ७६ | गारुगिः | ८६ | २९७–२९८ | गारुगिः | |
| ९६ | ७७ | चतुर्मुखः | ७८ | २९५ | चतुर्मुखः | |
| ९७ | ७८ | गौरीतालः | ११४ | ३०८ | गौरी | |
| ९८ | ७८–७९ | मुकुन्दः (द्वौ भेदौ) | १११ | ३०७ | मुकुन्दः | S. Raj. gives two alternative 'Lakṣaṇas' and S. R. only one. |
| ९९ | ७९ | कुविन्दः | ११२ | ३०७ | कुविन्दकः | |
| १०० | ७९–८० | भग्नः | ११६ | ३०९ | भग्नः | |
| १०१ | ८० | राजमार्त्तण्डः | ११८ | ३१० | राजमार्त्तण्डः | |
| १०२ | ८१ | वनमाली | २९ | २७२–२७३ | वनमाली | |
| १०३ | ८१ | हरिप्रियः | | | × | |
| १०४ | ८२ | षंग (खड्ग) नारायणः | | | | |
| १०५ | ८२ | सिंहनादः | ३१ | २७३ | सिंहनादः | |
| १०६ | ८३ | ललितः | ८५ | २९७ | ललितः | |
| १०७ | ८३ | उत्सवः | ९७ | ३०२ | उत्सवः | |
| १०८ | ८३ | हंसः | ९६ | ३०१ | हंसः | |
| १०९ | ८४ | घत्ता | १०९ | ३०६ | घत्ता | |
| ११० | ८४ | अन्तरक्रीडः | ९५ | ३०१ | अन्तरक्रीडा | |
| १११ | ८४ | राजनारायणः | ८७ | २९८ | राजनारायणः | |
| ११२ | ८५ | निःशङ्कः | ११९ | ३११ | निःशङ्कः | S. R. लगुरू पगुरू गलौ (।ऽऽ ऽ'ऽऽ ऽ ।)] |
| ११३ | ८५–८६ | शार्ङ्गदेवः | १२० | ३१२ | शार्ङ्गदेवः | |
| ११४ | ८६ | घण्टा | | | × | |
| ११५ | ८६ | कलध्वनिः | ११३ | ३०८ | कलध्वनिः | |

| S. Raj. III 3. 2. | | | S. R. Chap. V | | | |
|---|---|---|---|---|---|---|
| Serial No. | Śloka No. | Name of Tāla | Serial No. | Śloka No. | Name of Tāla | Remarks. |
| ११६ | ८७ | श्रीनन्दनः | ९० | २९९ | श्रीनन्दनः | |
| ११७ | ८७ | जनकः | ९१ | ३०० | जनकः | 'Lakṣaṇas' of S. R. and S. Raj. agree, but the notation in S. R. does not accord with the 'Lakṣaṇa'—नयसा वक्रः—।।। ।ऽऽ ।।ऽ |
| ११८ | ८७ | राजवङ्कोलः | ७२ | २९२ | रायवङ्कोलः | |
| ११९ | ८८ | विलोकितः | ९८ | ३०२ | विलोकितः | S. R. गो दौ दीप्तो विलोकिते ऽ ० ० ऽ' |
| १२० | ८८ | वर्णयतिः | १०० | ३०२ | वर्णयतिः | |
| १२१ | ८९ | दशविधो मण्ठः | ३८ | | दशविधोमण्ठः | |
| " | " | (१) मण्ठः | " | २७७ | (१) मण्ठः | |
| " | " | (२) अन्यो मण्ठः | " | २७७ | (२) वा मण्ठः | S. R. भाद् द्रावशब्दकौ (ऽ।। २×) |
| " | ९० | (३) मुद्रितमण्ठः | " | २७७ | (३) मुद्रितमण्ठः | |
| " | ९० | (४) अपरो मण्ठः | " | २७८ | (४) वा मण्ठः | S. R. जगण० and S. Raj. यगण०—there is a difference in notation accordingly. The remaining six varieties of मण्ठ have been dealt with in मण्ठप्रबन्ध (S. R. IV. 333–37) |
| " | ९१ | (५) जयप्रियमण्ठः | | | | |
| " | " | (६) मङ्गलः (मण्ठः) | | | | |
| " | " | (७) सुन्दरः (मण्ठः) | | | | |
| " | " | (८) वल्लभः (मण्ठः) | | | | |
| १२१ | ९२ | (९) कलापः (मण्ठः) | | | | |
| " | ९३ | (१०) कमलः (मण्ठः) | | | × | |
| १२२ | ९३ | एकमण्ठिका (१) | | | | |
| " | ९३–<br>–९४ | अपरा मण्ठिका (२) | | | × | |
| १२३ | ९४–<br>९५ | प्रतिमण्ठः (१) | ८० | २९५–<br>–२९६ | प्रतिमण्ठकः | S. R. gives only one variety, its alternative name is कोल्लट० in S. R. and मल्लक० in S. Raj. |
| " | ९५ | वा प्रतिमण्ठः (२) | | | × | |
| १२४ | ९६ | झम्पातालः | ७६ | २९४ | झम्पातालः | |
| १२५ | ९६ | प्रतितालः | ५० | २८३ | प्रतितालः | S. R. लौ द्रुतौ (।। ००) |
| १२६ | ९७ | निःसारुकः | ४० | २७९ | निःसारुकः | |
| १२७ | ९७ | अड्डताली | १०८ | ३०६ | अड्डताली | |
| १२८ | ९८ | ढेंकिका | ५८ | २८६ | ढेंकी | |
| १२९ | ९८ | एकताली | ६७ | २९० | एकताली | |
| १३० | ९९ | वर्णमण्ठिका | ६० | २८७ | वर्णमण्ठिका | |
| १३१ | ९९ | यतिलग्नः | १७ | २६६ | यतिलग्नः | |
| १३२ | १०० | भार्गवाङ्कः | | | × | |
| १३३ | १०० | चच्चरी | १५ | २६६ | चच्चरी | |
| १३४ | १०१ | कुतुकिप्रियः | | | × | |
| १३५ | १०१ | परिक्रमः | ११ | २६४ | कंदर्पतालस्य पर्यायः (परिक्रमः) | S. R. mentions परिक्रम० as an alternative name for कन्दर्प० |
| १३६ | १०२ | झङ्कृतिः | | | × | |
| १३७ | १०२–<br>–१०३ | उत्तरः | | | × | |
| १३८ | १०३ | बद्धायनः (डोचिली) | ७० | २९२ | डोम्बुली | S. R. omits the alternative name बद्धायन० |
| १३८ | १०३ | राजराजविलासकः | | | × | |

## तालप्रत्ययो नाम [illegible]

[illegible] संख्या [illegible]ष्टोद्दिष्टा म[illegible]भिः ।
[illegible] भजे शिवम् ॥ १ ॥

*आनन्त्यादिह तालानामशक्यं ग्रहणं [illegible] ।
त[illegible]द्भेदप्रत्ययार्थं तु लघूपायान् वदाम्यहम् ॥ २ ॥

तालभेदैः प्रतीयन्ते यैरुपायैः स्फुटीकृतैः ।
अतस्ते प्रत्यया नाम निरुक्ताः कृष्णभूभुजा ॥ ३ ॥

द्रुतादिस्थापनार्थं तु [1]पूर्वं प्रकृतिरिष्यते ।
[2]प्रस्तारः क्रमसंज्ञोऽथ [3]विपरीतः क्रमः परः ॥ ४ ॥

†नष्टोद्दिष्टे द्विधा प्रोक्ते ततश्च पृथगेतयोः ।
ततः संख्या च पातालं[4] द्रुतमेरुः स्मृतस्ततः ॥ ५ ॥

लघुगुर्वोः[5] पृथग्मेरु[:] प्लुतमेरुस्तथा परः ।
ततः संयोगमेरुश्च खण्डप्रस्तारकस्ततः[6] ॥ ६ ॥

चतुर्णां दादिमेरूणां नष्टोद्दिष्टे पृथक् पृथक् ।
त्रयोविंशतिरित्युक्ताः प्रत्ययाः पृथिवीभुजा ॥ ७ ॥

द्रुतप्रोक्ते द्रुतश्चैको दद्वये च लघुः स्मृतः ।
द्रुतत्रये [7]द्रुतलघू दैश्चतुर्भिर्गुरुर्भवेत् ॥ ८ ॥

दैः पञ्चभिर्द्रुतगुरू षड्भिस्तैः प्लुत एव हि ।
एवं संभवतो लेख्या महान्तः प्रकृताविह ॥ ९ ॥

॥ इति प्रकृतिः ॥ १ ॥

*इष्टतालद्रुतानां[8] यन्महद्रूपं भवेदिह ।
तदाद्याध[:]स्थले न्यस्यमल्पं शेषं यथोपरि ॥
यदूनं प्रागितस्तत् स्याद् वामतो महतो लिखेत् ॥१०॥

---

* cf. S. R. V 313
[1] H. begins from here.
[2] G. begins श्रीगणेशाय नमः । प्रस्तारः क्रम० etc. A. प्रस्तारक्रम०
[3] A. विरामान्तः
† cf. S. R. V 314,15 for 5-7 above.
[4] G. omits अनुस्वार
[5] G. H. omit विसर्ग
[6] प्रस्तारकक०
[7] G. ०द्भुत०
* cf. S. R. V 316, 17 for 10, 11 above.
[8] G. omits अनुस्वार



[illegible] पूर्वं [illegible] ।
[illegible] [1]प्रस्तारोऽयं प्रकीर्तितः ॥११॥

॥ इति क्रमप्रस्तारः ॥ २ ॥

[illegible] द्रुतान् पङ्क्तिकृतान् लिखेत् ।
दद्वयस्यादिमारभ्य [2]लघुपूर्वद्रुतस्य च ॥ १२ ॥

द्रुतस्य गुरुपूर्वस्य[3] प्लुतपूर्वद्रुतस्य च ।
अधस्ताल्लघुरालेख्यो लघुद्वय्यास्तथा पुनः ॥१३॥

गलयुग्मस्य च तथा [4]पलयोश्च युगस्य च ।
[5]प्लुत[:] स्याल्लघुपूर्वस्य गुरोरपि तथा भवेत् ॥१४॥

अधस्ताद् गो विधातव्यस्तथा गुरुयुगस्य च ।
प्लुतः[6] स्याल्लघुपूर्वस्य गुरोरपि तथा भवेत् ॥१५॥

ऊर्ध्ववत् पुरतो लेख्यं[7] पश्चात् स्वल्पं महत्यपि ।
संभवित्येष विज्ञेयः[8] प्रस्तारो वैपरीत्यतः ॥१६॥

दद्वयाधो लघुं [9]दद्याल्लाद्यदस्यापि लं लिखेत् ।
लद्वयाधो गुरुं दद्या[10]-ल्लाद्यगस्यापि गं लिखेत् ॥
गुरोरधो लिखेद्दीप्तं पृष्ठे भवति चेल्लघु ॥१७॥

यथोपरि तथा शेषमूनं [11]पूर्वद्रुतैरिह ।
सर्वप्लुतावधिः कार्यः [12]प्रस्तारो वैपरीत्यतः ॥१८॥

इति विपरीतक्रमप्रस्तारः ॥ ३ ॥

---

[1] G. कार्यौ
[2] A. लघुपूर्वं ( adds अनुस्वार)
[3] G. गुरुवंस्य
[4] A. लपयोश्च
[5] This line is found here only in A. It appears to have been repeated from the second half of the next verse.
[6] A. omits विसर्ग
[7] G. omits अनुस्वार
[8] G. H. omit विसर्ग
[9] G. H. दद्यात् ला०
[10] G. H. दद्या ला०
[11] G. H. पूर्वं (add अनुस्वार)
[12] G. प्रस्तरो; H. writes द्रुतानां............यावन्ति from the next verse, after का० here, cancels this portion by giving round brackets at both ends and again writes कार्यः प्रस्तारो etc.

| इति विपरीतक्रमप्रस्तारः | इति क्रमप्रस्तारः |
|---|---|
| o o o o o o | S' |
| । o o o o | । S |
| o । o o o | o o S |
| o o । o o | S । |
| । । o o | । । । |
| S o o | o o । । |
| o o o । o | o । o । |
| । o । o | । o o । |
| o । । o[1] | o o o o । |
| o S o | o S o |
| o o o o । | o । । o[2] |
| । o o । | । o । o |
| o । o । | o o o । o |
| o o । । | S o o |
| । । । | । । o o |
| S । | o o । o o |
| o o S | o । o o o |
| । S | । o o o o |
| S' | o o o o o o |

१. G. omits this line

२. G. omits this line

द्रुतानां यावतामत्र[1] [2]प्रस्तारो विंशयोर्भवेत् ।
तत्र यावन्ति रूपाणि संभवन्त्येषु मध्यतः[3] ॥१९॥

[4]तत्रैतावतिथं [5]रूपं किंरूपमिति नोदिते ।
अङ्कसंख्यां लिखेत्तावत् संख्याङ्कान् च [6]तदन्तिमे ॥२०॥

*सङ्ख्याङ्के पातयेन्नष्टसङ्ख्याङ्कमथ [7]शिष्टतः ।
पातयेत् पूर्वपूर्वाङ्कं द्रुतस्त्वपतनाद्[8] भवेत् ॥२१॥

[1] G. ०मात्र

[2] A. प्रस्तारविषयो भवेत् G. writes after प्रस्तारो विंशयो०, संख्याङ्काद्येन ............संख्याङ्कसंत० from verse 35, 36 and ०दंकानपतितापात० (?)—both these portions are separately cancelled with round brackets at both ends in each case, followed by ०र्भवेत् of verse 19.

[3] G. मध्यते

[4] G. H. अत्र तावतिथं

[5] G. रूप इति नोदिते

[6] G. ०वन्तिमे

* cf. S. R. V 326-333 for 21-27 above.

[7] G. शिष्टितः

[8] G. H. ०पतिनाद्



न चेत् पतति तत्पूर्वो लघुस्तु पतिताद् भवेत् ।
अकृतार्थेणो(नो)त्तरेण सहर्जुः पतिताद् भवेत् ॥२२॥

[1]उत्तरस्य कृतार्थत्वे पूर्वेणाकृतकर्मणा ।
पृथक्[2](ग्)लघुः सान्तरे तु पतितेऽथ निरन्तरे[3] ॥२३॥

लघुरेव गुरुर्यत्र [4]तार्तीये गुरुकारणात् ।
पतिते गुरुरेव स्यात् प्लुतोऽङ्काभावतः पुनः ॥२४॥

द्रुताः स्युस्तालपूर्त्यर्थमित्थं[5] नष्टस्य [6]निर्णयः ।
अनष्टसद्विलासेन राजराजेन निर्मितः ॥२५॥

॥इति नष्टम् ॥४॥

कतमः[7] स्यादसौ भेदः [8]प्रश्नश्चेदीदृशो भवेत् ।
तदा नष्टवदेवेष्टामङ्कश्रेणीं लिखेदिह ॥२६॥

यैरङ्कैः[9] पतितैर्नष्टे लभ्यन्ते ये प्लुतादयः ।
उद्दिष्टस्यास्त एवेह तानेवाङ्कानवाप्नुयुः ॥२७॥

॥ इत्युद्दिष्टम् ॥५॥

[10]नष्टाङ्केनैकहीनेन [11]सङ्ख्याङ्कान् पातयेत् क्रमात् ।
पूर्ववच्चिन्तयेदङ्कान्[12] पतितापतितान् सुधीः ॥२८॥

॥ इति विपरीतक्रमप्रस्तारनष्टम् ॥६॥

प्रागुद्दिष्टवदुद्दिष्टमियदत्र विशिष्यते ।
[13]पतिते च तु तैरङ्कैरेकैकेन तु संयुतैः ॥
संख्योद्दिष्टस्य विज्ञेया [14]प्रस्तारस्याक्रमस्य हि ॥२९॥

॥ इति व्युत्क्रमप्रस्तारस्योद्दिष्टम् ॥७॥

[1] G. repeats अकृतार्थेण after पतिताद्भवे of verse 22, which is cancelled by giving ( ) round brackets on both the sides, followed by त् (of भवेत्) उत्तारस्य कृतकर्मणा; thus कृतार्थत्वे पूर्वेणा० is omitted.

[2] G. H. पृथक

[3] G. ०तरै

[4] G. H. तात्तीये (omit रेफ)

[5] G. H. ०मिष्टं

[6] G. निर्मंणयः (र्मं is not cancelled),

[7] A. omits विसर्ग

[8] G. writes प्रश्ने (the ` मात्रा on श्न is cancelled by a dot in the centre) and omits ` on श्च

[9] G. ०रंके H. ०रंकैः

[10] G. H. यष्टाः (H. नष्टाः) केनैकहीनेन

[11] A. संख्याकान् G. H. सख्यांकान्

[12] A. ०देकान् G. H. दंकान

[13] A. G. पतितै H. पतातै ।

[14] G. प्रस्तारे स्यात् क्रमेंस्य हि H. प्रस्तारे स्यात् क्रमस्य हि (त्र is written after क्र in क्रमस्य and cancelled with a slanting vertical stroke at the top).

*न्यस्यादावेककं द्वौ च लिखेत्तद्योगमग्रतः[1] ।
[2]द्वितीयतुर्यषष्ठाङ्कैः [3]संयोज्यात्यन्ततोऽग्रतः ॥३०॥

अङ्कश्रेणीं[4] लिखेदत्र दक्षिणेन क्रमेण तु ।
[5]तृतीयपञ्चमावङ्कावभावे तुर्यषष्ठयोः ॥३१॥

ग्राह्या वैवं समाप्येत सा चाङ्कैरिष्टतालगैः ।
[6]द्रुतसंख्यैरिहस्थाङ्कैस्तालभेदाः[7] क्रमेण ते ॥३२॥

संख्यायन्ते ततः प्रोक्ता संख्या संख्यावदीशिता ।
अत्रैव [8]येषामङ्कानां योगादङ्कोऽन्तिमो भवेत् ॥३३॥

संख्यायन्ते क्रमादङ्कैर्भेदास्तैरन्ततः स्फुटाः ।
दान्ता लान्ताश्च गुर्वन्ता[:] प्लुतान्ताश्च यथास्थिताः ॥३४॥

†सर्वद्रुतादिका भेदा मीयन्ते येन तालगाः ।
संख्याङ्काद्येन योगेन वक्ष्ये पातालकं तु तत् ॥३५॥

इष्टतालद्रुतमिता[9] स्थाप्या संख्याङ्कसंततिः ।
इन्दुर्दस्त्रौ[10] गुणाश्चैव रसा आशास्तथैव च ॥३६॥

नन्देन्दू गुणरामाश्च व्योमर्तू रसदिक् [11]क्रमाः ।
इत्याद्यभीष्टतालस्थद्रुतसंख्याऽङ्करूपिणी ॥३७॥

| * १ | २ | ३ | ६ | १० | १९ | ३३△ | ६० |
|---|---|---|---|---|---|---|---|
| १०६ | १९१‡ | ३४० | ६१० | १०८९ | १९५० | ३४८५ | ॥इति $ संख्या ॥८॥ |

तदधो वसुधादस्त्रौ[12] बाणा आशा [13]दिशो[ऽ]क्षिणी ।
युगवेदा भूमिनन्दा व्योमनागेन्दवस्तथा ॥३८॥

* cf. S. R. V 318-23 for 30-34 above.

[1] G. ०त्तद्याग० [2] A. ०तूर्यं० [3] A. G. H. संयोज्यां०
[4] A. G. omit अनुस्वार [5] G. तृतीयपमा० [6] A. ०रिहास्थांकै०
[7] A. omits विसर्ग [8] A. एषा० † cf. S. R. V 334-37 for 35-39 above.
[9] A. adds विसर्ग [10] A. ०र्दस्त्रै [11] G. H. ०दिकप्रमाः
* A. gives this table after the first half of verse 36 and G. H. give it after verse 34.
△ S. R. completes the table with 33 and omits the subsequent figures. ‡ G. १०९१
$ A. omits इति and ८; G. H. give इति संख्या ॥८॥ (G. ॥१८॥) after verse 34 before the table.
[12] G. ०दस्त्रो [13] G. H. द्विशोक्षणी



नागेषुगुणसंख्याश्चेत्यादिकाप्ताङ्करूपिणी ।
तदुत्पत्तिप्रकारोऽथ दर्श्यतेऽत्र यथाविधि ॥३९॥

तदधो रूपकं[1] न्यस्याथोऽ[न्]त्यादींश्चतुरस्तथा ।
[2]क्रमादन्त्योपान्त्यतुर्यषष्ठकोष्ठाङ्ककानिह ॥४०॥

तत्पङ्क्तिस्थांल्लिखेदङ्कान् पुरः सङ्ख्याङ्कवद्युतान् ।
अन्त्यादुपरिसंख्याङ्ककोष्ठकाङ्केन संयुतान् ॥४१॥

अत्र प्रतिनिधिर्नैव [3]संख्यावत्तुर्यषष्ठयोः ।
एवमत्रेष्टतालस्थद्रुतप्रमितकोष्ठकैः ॥४२॥
[4]जातैरन्त्योपान्त्यतुर्यषष्ठाङ्कस्थैः क्रमेण च ।
मीयन्ते सर्वभेदस्था द्रुताद्या [5]इति भूभृता ॥
निर्मितं विदुषां प्रीत्यै पातालकमिह स्फुटम् ॥४३॥

| १ | २ | ३ | ६ | १० | १९ | ३३ | ६० | १०६ | इति |
|---|---|---|---|---|---|---|---|---|---|
| १ | २* | ५ | १७† | २२ | ४४ | ९१‡ | १८० | ३५८ | पातालम् ॥९॥ |

द्रुतमेरुमथो वक्ष्ये एकद्व्यादिककारणम्[6] ।
$इष्टतालद्रुतमितान् कोष्ठान् [7]तिर्यक् समालिखेत् ॥४४॥

पङ्क्तिस्थान् वामतस्तस्या ऊर्ध्वा कोष्ठैककोनिता ।
ततः परा द्विद्विकोष्ठहीनाः पूर्ववदालिखेत् ॥४५॥

स्वस्वपूर्वस्थ-पङ्क्तेस्तु तासु स्यादन्त्यकोष्ठगः ।
एकैकाङ्कस्ततः सर्वत्रासु स्यादङ्कयोजनम् ॥४६॥

अन्त्योपान्त्यतुर्यषष्ठान्[8] न्यसेत् संमील्य तद्युतिम् ।
अधःपङ्क्तेस्तृतीयादिकोष्ठेषु विषमेषु च ॥४७॥

[1] A. G. omit अनुस्वार
[2] G. writes क्रमा and then repeats—०दिकाप्राप्ताङ्करूपिणी……रूपकं न्य०; this portion is cancelled with a round bracket on both sides and then follows ०दंत्योपांत्य० [3] A. संख्या च तुर्य०
[4] A. जात्यै० [5] A. इव * A. looks like ८
† A. looks like १० ‡ S. R. completes this table with 93 and omits the preceding line. [6] G. H. ०दकारणम्
$ cf. S. R. V 338-46 for 44-53 above. [7] A. तीर्यक्
[8] A. H. omit न्, G. ०षष्ठकान्, then portion beginning with न्यसेत् and ending with द्वितीयतुर्य० is omitted, षष्ठकान् of the first half of verse 48 is linked up here.

समकोष्ठेषु संयोज्य द्वितीयतुर्यषष्ठकान् ।
षष्ठस्यासंभवे ग्राह्यो बुधैः पञ्चमकोष्ठकः ॥४८॥

न्यसेद्युतिं प्रयत्नेन तत्परासु च पङ्क्तिषु ।
[1]अन्त्यमेकमधःपङ्क्तिरूपान्त्यतुर्यषष्ठकान् ॥४९॥

तत्पङ्क्तिस्थांस्तु संयोज्य विषमे कोष्ठके लिखेत् ।
अन्त्यौ द्वौ तुर्यषष्ठौ च संयोज्य तद्युतिं समे ॥५०॥

द्रुतमेरौ क्रमादेवं सर्वाः स्युरूर्ध्वपङ्क्तयः ।
एकत्र्याद्या द्रुता ज्ञेया विषमश्रेणिसंगताः[2] ॥५१॥

समायैः कोष्ठगैरङ्कैः[3] पुनरेवं यथाक्रमम् ।
द्रुतहीना[न्][4] द्व्यादिसमद्रुतयुक्तान् समुन्नयेत् ॥५२॥

ऊर्ध्वपङ्क्तिस्थसर्वाङ्कयोगात्[5] संख्या[ऽ]पि गम्यते ।
द्रुतमेरुरयं प्रोक्तो धैर्यविद्रुतमेरुणा ॥५३॥ ॥ इति द्रुतमेरुः ॥१०॥

॥ द्रुतमेरुः ॥

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | | | | १ |
| | | | | | | | | | | | १ | १ | १३ |
| | | | | | | | | | १* | १ | ११ | १२ | ७७ |
| | | | | | | | १ | १ | ९ | १० | ५४ | ६५ | २६४ |
| | | | | | १ | १ | ७ | ८ | ३५ | ४४ | १४७ | २०० | ५४६ |
| | | | १ | १ | ५ | ६ | २० | १७† | ७० | १०४‡ | २१०¶ | ३५७ | ६४६ |
| | १ | १ | ३ | ४ | ९ | १४ | २५ | ४४ | ६३ | १२५ | २३३‖ | ३३६ | ३५९ |
| १ | १ | २ | २ | ५ | $४४ | §१२ | ७ | २६ | १३ | ५६ | २४ | ११८ | ४४ |

लघुमेरुमथो वक्ष्ये तत्र च प्राग्वदिष्यते ।
△कोष्ठपङ्क्तिषु विन्यासस्तासामेकैककोष्ठके ॥५४॥

आद्ये(द्य)एकाङ्कविन्यासस्तदधःपङ्क्तिकेषु तु ।
शेषकोष्ठेष्वन्त्यतुर्यषष्ठानां योगमालिखेत् ॥५५॥

[1] G. ०मेकमधमधः [2] G. H. ०श्रोणि० [3] A. omits विसर्ग
[4] G. H. ०हीन० [5] G. H. सर्वाक० ¶ G. २००, H. २२०
‖ G. H. १५३ ‡ G. H. १४ * G. H. १०
† G. २०, H. २७ § A. looks like १८ $ G. H. ४
△ cf. S. R. V 347-50 for 55-59 above.



अन्यासु शेषकोष्ठेषूपान्त्याधस्तनसंयुतम् ।
अधःपङ्क्तिवदालेख्यमत्र तुर्याद्यसंभवे ॥५६॥

तृतीयपञ्चमौ ग्राह्यौ बुधैः प्रतिनिधित्वतः ।
कोष्ठाङ्कैरूर्ध्वपङ्क्तिस्थैर्द्रुतमेरुवदत्र तु ॥५७॥

लघुहीनादुपक्रम्यैकाद्येकोत्तरवृद्धितः[1] ।
लघवः सर्वलघ्वन्ताः क्रमात्(द्)ज्ञेया विचक्षणैः ॥५८॥

ऊर्ध्वकोष्ठाङ्कसंयोगात् संख्यापि ज्ञायते बुधैः ।
लघुमेरुरयं प्रोक्तो राजराजेन धीमता ॥
प्रदेयहाटकस्फीतिसलघूकृतमेरुणा ॥५९॥ ॥ इति लघुमेरुः ॥११॥

लघुमेरुः

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | | १ |
| | | | | | | | | | १ | ६ | २१ |
| | | | | | | | १ | ५ | १५ | ३५ | ७५ |
| | | | | | १ | ४ | २०* | २० | ३९ | ७६ | १४८ |
| | | | १ | ३ | ६ | १० | १८ | ८३† | ६१ | १०८ | १८६ |
| | १ | २ | ३ | ४ | ७ | ‡१८ | २१ | ३६ | ५४ | ९४ | १२३ |
| १ | १ | १ | २ | ३ | +५ | ७ | १०§ | १४ | २० | ३१ | $४६ |
| ०॥ | १ | ¶२ | ५ | १० | २२ | ७४ | ९१ | १८० | ३५० | ६९ | १३६§ |
| १ | २ | ३ | ६ | १० | १९ | ३३ | ६० | १०६ | १९१ | ३४० | ६१० |
| १ | φ२ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |

†[2]गुरुमेरावधः पङ्क्तिरिष्टा[3] तालद्रुतैर्मितैः[4] ।
कोष्ठैर्युता ततोऽन्या तु कार्या कोष्ठत्रयोनिता ॥६०॥

[1] G. ०काद्येरवृद्धितः (omits ०कोत्त०) * H. १० † H. ३३
‡ G. १९ H. १२ + H. writes ७५ but cancels ७.
§ H. १४ $ H. ३६
¶ A. ८ § H. १३६० φ A. ८
† cf. S. R. V 351-54 for 60-65 above.
[2] G. ०मेरो० [3] A. ०रिष्ट० [4] G. ०मितैः (omits रेफ)

अपराः स्वस्वपूर्वस्याः[१] कोष्ठपङ्क्तेरयोनिताः ।
चतुश्चतुःकोष्ठकैः[२] [३]स्युरास्वप्यङ्कनिवेशनम् ॥६१॥

[४]उपरिष्टादाद्यकोष्ठेष्वेकैकाङ्कनिवेशनम्[५] ।
ततः प्रथमपङ्क्तिस्थो द्वितीयो द्वयङ्कवान् भवेत् ॥६२॥

[६]अन्त्योपान्त्याद्यषष्ठाङ्कयोगिनः शेषकोष्ठकाः ।
परासां तु द्वितीयादिकोष्ठकेषु विलिख्यते ॥६३॥

[७]योगोऽन्त्योपान्त्यषष्ठानामधस्तुर्याङ्कसंयुतः[८] ।
ज्ञातव्योऽत्र लघुस्थाने गुरुः शेषमिहेष्यते ॥६४॥

[९]लघुमेरुवदेवं तु गुरुमेरावपि स्फुटम् ।
गुरुमेरुरिति प्रोक्तो धैर्यादिगुरुमेरुणा ॥६५॥

॥[१०]इति गुरुमेरुः ॥१२॥

गुरुमेरुः

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | | १ |
| | | | | | | | १ | ३ | ९ | २७ | ५१ |
| | | | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| | | | १ | ७ | ५ | १० | ७० | ३५ | १७ | १३८ | ७५२ |
| १ | ७ | ३ | ४ | ५ | १४ | ७३ | ३९ | १४ | +७९ | १६० | ३२५ |

†एवमेव विधातव्यः प्लुतमेरुरयं पुनः ।
विशेषोऽधस्तनी [११]पङ्क्तिरिष्टतालद्रुतैर्मिता ॥६६॥

[१] A. omits विसर्ग [२] G. omits विसर्ग [३] G. H. ०रास्वथांक०
[४] G. omits this line. [५] H. ०ष्वेकैकांत०
[६] G. H. ०पान्त्यषष्ठांकेन योगेन : [७] A. योगोपांत्य०
[८] G. मधुस्तुर्यांकसयुतः । G. gives a blank and incomplete diagram here (folio 424)
[९] G. लघुमेवं रुवराटा गुरुमेरुरिति प्राक्ता (प्राक्तो) धैर्यदिगुरुमेरुः ।
[१०] A. G. omit इति etc. + A. G. ७७९
† cf. S. R. V 354, 55 for 66-70 above.
[११] G. links up पञ्चकोष्ठो० etc., of the next line after पंक्ति०, omitting ०रिष्टताल० etc.



कर्तव्या तत्परा पङ्क्तिः[१] पञ्चकोष्ठोनिता ततः ।
षट्षट्कोष्ठोनिताः सर्वाः[२] कर्तव्या ऊर्ध्वमूर्धतः ॥६७॥

अधस्तन्यां ततः पङ्क्तौ षष्ठाङ्कस्थानगोचरः ।
तुर्याङ्कोऽत्र विधातव्यस्त्रियोगोऽयमतः परम् ॥६८॥

अधःस्थपंक्तिषष्ठाङ्कयुक्तः स्यात् परपङ्क्तिषु ।
गुरुस्थाने प्लुतं विन्द्यादनुक्तं गुरुमेरुवत् ॥६९॥

[३]अत्र सर्वं विधातव्यमित्याह पृथिवीपतिः ।
प्लुतमेरुरयं प्रोक्तः [४]कालसेनेन भूभृता ॥७०॥

॥ इति प्लुतमेरुः ॥१३ ॥

प्लुतमेरुः

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | | १ |
| | | | | | १ | ७ | ५ | १० | ७७ | ४४ | ९५ |
| १ | ७ | ३ | ६ | ५ | *७२ | ३१ | ५५ | ९६ | ७३ | ९३ | ५७० |

संयोगमेरुनिर्माणमथ ब्रूते धराधिपः ।
†येन विज्ञायते रूपं दादिसंयोगसंभवम् ॥७१॥

ऊर्ध्वाश्चतस्रः कर्तव्याः श्रेणयः कोष्ठभूषिताः ।
इष्टतालद्रुतमितैः कोष्ठैर्युक्तास्ततः परम् ॥७२॥

पङ्क्तिद्वयं [५]स्वस्वपूर्वावलेः कर्तव्यमत्र[६] तु ।
[७]द्विद्विकोष्ठोनितं षष्ठ्या आवलेः श्रेणिकाद्वयम् ॥७३॥

[१] H. repeats here ०रिष्टतालद्रुतैर्मिता from the preceding verse, cancels this repeated portion with a round bracket on each end and then gives पञ्चकोष्ठो० etc. (The omission in G. noted above may be ascribed to this confusion.)
[२] G. H. omit विसर्ग [३] A. अर्धसर्व०
[४] G. H. कृतकुम्भलमेरुणा (कृ is not clear in G., looks like प्ल)
* A. looks like ७८
† cf. S. R. V 356-76 for 71-125 above.
[५] G. omits one स्व, gives a repeated version of कर्तव्याः (of verse 72)……पंक्तिद्वयं and then writes स्वस्वपूर्वावलेः correctly.
[६] G. ०तमत्र
[७] G. ०केष्ठोनितं

कोष्ठकैकोनितं कार्यं ततः स्यादावलित्रयम् ।
अष्टम्याः कोष्ठकैकेन[१] न्यूनं [२]तस्मात् परावली ॥७४॥

द्वे द्विद्विकोष्ठकं[3] न्यूने स्वस्वपूर्वावलेः[४] स्मृते ।
ततः स्यादावलिद्वन्द्वं स्वस्वपूर्वावलेः पुनः ॥७५॥

एकैककोष्ठकं[५] न्यूनमेदं[६] पञ्चदशाभवन् ।
अथासां ज्ञेयविधिनोपरिष्टादङ्कनं यथा ॥७६॥

आद्ये दलगपा[न्]न्यस्येत्[७] [८]क्रमाच्छ्रेणीचतुष्टये ।
ततः क्रमात्[९] परामूर्ध्वं दलौ दगौ दपौ [१०]गलौ ॥७७॥

लपौ गपौ च दलगा दलपा [११]दगपा [१२]अपि ।
लगपायो(श्च)दलगपा न्यस्तव्यास्तालभेदगाः ॥७८॥

दपङ्क्तौ सर्वकोष्ठा[:]स्युरेकैकाङ्केन संयुताः ।
लपङ्क्तौ क्रमतः कोष्ठाः स्वेनैकाङ्केन संयुताः ॥७९॥

एकान्तरास्ततः पङ्क्तौ गुरोः कोष्ठत्रयं भवेत् ।
खयुक्तं तुर्यकोष्ठे स्यादेक एवं परे अपि ॥८०॥

प्लुतपङ्क्तौ पञ्च कोष्ठाः खयुजो रूपवान् परः ।
एवं स(पू)र्वावलिः साध्याऽभीष्टद्रुतपदावधिः ॥८१॥

अस्मिन् सर्वद्रुताः[13] सर्वलघवः सर्वगा अपि ।
सर्वप्लुताश्च[१४] ये भेदा भेदा ये[१५] स्युर्द्वियोगजाः ॥८२॥

त्रियोगसंभवा[१६] भेदाश्चतुर्योगभवा अपि ।
संख्यायन्ते, यदुक्त(क्तं)स्तन्मेदः संयोगपूर्वकः ॥८३॥

---

[१] G. कोष्ठकैन
[२] A. तत् स्यात्
[3] G. omits अनुस्वार
[४] A. omits विसर्ग
[५] G. H. ०के
[६] G. omits अनुस्वार
[७],[९] A. omits त्
[८] A. H. क्रमात् श्रेणि० G. क्रमात् श्रोणि०
[१०] G. H. लगौ
[११] G. omits दगपा and H. cancels it with a small horizontal stroke above.
[१२] G. H. इति। H. writes after इति ततः परात् क्रमात् परामूर्ध्वं दलौ दगौ दपौ लगौ and cancels it with a round bracket at each end (परात् is cancelled with a horizontal stroke).
[13] G. omits सर्वद्रुताः
[१४] G. ०श्चतुर्योगभेदा ये स्युर्द्वि०
[१५] A. यै स्युद्वि० (omits रेफ)
[१६] G. ०भवादे



अधुना मुग्धबोधार्थं तदङ्कप्रक्रियोच्यते ।
आद्यासु चतसृष्वेवं निष्पन्नासु[१] ततः परम् ॥८४॥

द्वियोगजास्तु ये भेदाः षट्सु [२]तच्छ्रेणिकासु च ।
पञ्चमीतस्तु[3] दशमी यावदङ्कविधिस्त्वयम् ॥८५॥

उपरिष्टात् समारभ्य स्यादधोऽधोऽङ्कलेखनम् ।
योगो दलगपानां स्यात् कोष्ठकेषु यथाक्रमात् ॥८६॥

[४]अन्त्यपूर्वद्वितीयाङ्कतुर्यषष्ठाङ्ककोष्ठकैः । यथा ॥
[५]अन्त्योऽङ्को द्रुतपङ्क्तौ स्याल्लघुपङ्क्तौ द्वितीयकः ॥८७॥

[६]तुर्योऽङ्को गुरुपङ्क्तौ स्यात् षष्ठस्तु प्लुतपङ्क्तिगः ।
ततो दलगपादीनां [७]मध्यादधोगजा भिदाः ॥८८॥

तत्पङ्क्तौ तद्द्रुदाङ्कानां योगं संभवतो लिखेत् ।
यथा दला लौ(?)विलिखेद्योगमन्त्यद्वितीययोः ॥८९॥

दगा लावन्त्यतुर्याख्यो[८] दपा लावन्त्यषष्ठयोः[९] ।
द्वितीयतुर्ययोर्योगो लगपङ्क्तौ द्विषष्ठयोः ॥९०॥

लपा दौ[१०] गपयोः पङ्क्तौ योगः स्यात्तुर्यषष्ठयोः ।
तद्यथा [११]लेखनीया या पङ्क्तिस्तत्रुपरिस्थिता ॥९१॥

तिरश्चो श्रेणिका या स्यादङ्का ये स्युस्तदाश्रिताः ।
क्रमाद्दलगपानां स्युराद्यपङ्क्तिचतुष्टये ॥९२॥

तेषु दादिगताङ्केषु मध्ये या प्रस्तुता भिदा ।
दलयोगादिका तत्र स्थिता ये स्युर्द्रुतादयः ॥९३॥

तद्व्यक्तेर्व्यञ्जिका या स्यात् प्रथमश्रेणिकादिका ।
[१२]अङ्कांस्ततत्संश्रितान् धीमान् गृह्णीयात् प्रयतात्मवान् ॥९४॥

ततश्च दलघुश्रेण्यां प्रद्विपङ्क्तिसमाश्रितान् ।
दगपङ्क्तौ [१3]प्रतृपङ्क्त्योर्दपश्रेणौ प्रतुर्ययोः ॥९५॥

---

[१] G. H. ०स्तु
[२] G. ते छ्रेणि०
[3] A. पंचमी वस्तु G. पंचम तिस्तु
[४] A. अंत्यपूर्वाद्वि०
[५] G. अंत्यांको
[६] G. तुर्यांको
[७] G. H. मध्याद्यद्यो
[८] G. तुयरिख्या H. तुर्याख्यों (adds अनुस्वार)
[९] G. षयोः
[१०] A. लौ
[११] G. H. लेखिनीया
[१२] A. अंद्याका G. H. अंकास्ततत्
[१3] A. प्रति० G. H. पत्रि०

लगपङ्क्तौ द्वित्रि(तृ)पङ्क्त्योर्लपा दौ[1] तु द्वितुर्ययोः ।
गपा लौ त्रि(तृ)चतुर्थ्योस्त्या(स्ता)नङ्कान् गृह्णीत तत्त्ववित्॥९६॥

[2]तानुपान्त्यद्वितीयाद्यानङ्कान् योज्यान् द्रुतादिषु ।
[3]प्रकृतेषु विपर्यस्तान् [4]यथावत्तदिहोच्यते ॥९७॥

यदा दला लावाद्याया[:] दा(पा)लेरन्त्योऽत्र गृह्यते ।
द्वितीयस्यास्तथा [5]पालेरुपान्त्यो गृह्यते यदा ॥९८॥

तदानयोर्विपर्यासे द्विप्रपङ्क्त्योः क्रमेण च ।
अन्त्योपान्त्यग्रहस्त्वेवमन्यास्वपि विपर्ययः ॥९९॥

अङ्काभावे [6]लिखेच्छून्यमेवमन्यास्वपि स्फुटम् ।
त्रियोगजा ये चत्वारश्चतुर्योगे तथैककः ॥१००॥

तत्पङ्क्तीनामनेनैव प्रकारेणाङ्कपूरणम् ।
अयमत्र विशेषो ये [7]त्रियोगोत्थेषु तेषु[8] च ॥१०१॥

भेदा द्वियोगजाः सन्ति तेषां सन्निहितं पुरः ।
कृत्वा पूर्ववदङ्कानां कर्तव्यं[9] ग्रहणं यथा ॥१०२॥

दलगानां विपर्यस्तयोग[:]पङ्क्तावुदीरितः ।
ग्रहोऽन्त्योपान्त्यतुर्याणामत्र यत् स्याद् भिदात्रयम् ॥१०३॥

द्वियोगजातं दलयोर्दगयोर्लगयोरपि ।
तत्पङ्क्त्यन्त्योपान्त्यतुर्या ग्रहणीया विपर्ययात् ॥१०४॥

ये चत्वारश्चतुर्योगे भेदाः प्रोक्तास्त्रियोगजाः ।
योजनीयस्तदङ्केषु पूर्वप्रोक्तो[10] विपर्ययः ॥१०५॥

संयोगमेरुरेष स्यादत्र या[ऽऽ]लिस्तिर[:]स्थिता ।
[11]तत्कोष्ठसंस्थितैरङ्कैस्तैस्तैः सर्वद्रुतादयः ॥१०६॥

भेदा ऊर्ध्वालिगा मेया भेदाभावस्तु शून्यतः ।
उपरिष्टात् समारभ्य पङ्क्तिर्यावतिथी भवेत् ॥१०७॥

[1] A. लौ
[2] A. तानप्यंत्य०
[3] G. प्रतिकृतेषु
[4] G. यथावान्
[5] A. लले० G. दालाल० H. लाले०
[6] A. G. H. लिखेत् शून्य०
[7] A. त्रियोगोथेषु G. वियोगोत्थसु H. वियोगोत्थेषु
[8] H. repeats तेषु
[9] G. omits अनुस्वार
[10] G. ०प्रोक्ता
[11] A. omits this line.



तिरश्चीनात्र विज्ञेयस्तालस्तावद्[1] द्रुतो बुधैः ।
तत्पङ्क्तिस्थितसर्वाङ्कैः संख्या तत्तालरूपगा[2] ॥१०८॥

अथाङ्कस्थितिमेतस्य सुबोधार्थं गृणाम्यहम् ।
उपरिष्टात्[3] समारभ्य षोडशद्रुतसंख्यया ॥१०९॥

दपङ्क्तावेककाङ्केन युक्ताः षोडशकोष्ठकाः[4] ।
विषमे खं समे रूपमेवं सर्वे लपङ्क्तिगाः ॥११०॥

त्रयस्त्रयः सशून्याः स्युस्तुर्यस्तुर्यस्तु रूपवान् ।
गुरुपङ्क्तेः पपङ्क्तेस्तु पञ्चपञ्च खसंयुताः ॥१११॥

षष्ठः षष्ठो रूपयुक्तो दलपङ्क्तावथोच्यते ।
नेत्रेऽग्निर्मुनयो रुद्रा नखा दन्ता युगेषवः ॥११२॥

मुनिनागा गुणोपायेन्दवो[5] [6]भूगुणदस्रकाः ।
ऋत्वद्रिवह्नयोऽष्टेन्दुरसा षड्जज(?)नन्दकाः ॥११३॥

[7]बाणरन्ध्रेषु वसुधा दगपङ्क्तिरथोच्यते ।
नेत्रेऽग्नयो युगा बाणा नन्दा विश्वे धृतिस्तथा ॥११४॥

तत्त्वानीषुगुणा नन्दगुगा वसुरसा अपि ।
गुणनन्दा अथो पङ्क्तिर्दपयोरभिधीयते ॥११५॥

खमक्षिणी[8] गुणा वेदा बाणाः स्कन्दमुखानि च ।
नगा भवाश्च[9] तिथयो नखा ऋत्वश्विसंख्यकाः ॥११६॥

लगा लावक्षिणी[10] व्योमगुणाः खं मुनयोऽपि खम् ।
रुद्रा व्योमनखा अभ्रं रदा अथ लपालिगाः ॥११७॥

खमक्षिणी[11] तथा व्योमवह्नयः खं युगानि च ।
नभो नागाः खमर्काश्च गपपङ्क्तिरथोच्यते ॥११८॥

त्रिषु व्योमक्रमाद्युग्मं[12] त्रिषु खं वह्नयो नभः ।
[13]गुणा अर्थकादशी च दलगालिस्त्रियोगजाः ॥११९॥

[1] G. स्तालं तावद् H. ०स्ताल तावद्
[2] G. adds विसर्ग
[3] G. ०त
[4] G. ०प्ताः
[5] G. गुणोपयं । दवो (gives रेफ on प, which is cancelled).
[6] A. भूगुणा G. भृगुण०
[7] A. बाणा०
[8] G. H. ०क्षणी
[9] A. भवोश्च
[10], [11] G. H. ० क्षणी
[12] G. H. omit अनुस्वार
[13] G. अंगुणा

|संयोगमेरुः|

| *ऽ १ | । ० | ऽ ० | ऽ' ० | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | ० | ० | ०।[1] | | | | | | | | | | | |
| १ | ० | ० | ० | २ | † | | | | | | | | | | |
| १ | १ | १ | ० | ३ | ०ऽ[2] | | | | | | | | | | |
| १ | ० | ० | ‡० | ७ | ८‖ | ०ऽ'[3] | ।ऽ | | | | | | | | |
| १ | १ | ० | १¶ | ११ | ३ | ० | ०Φ | ।ऽ' | ऽऽ' | ०।ऽ[4] | | | | | |
| १[४] | ० | ० | ० | २० | ४ | ८ | ८ | ० | ० | ६ | △ | | | | |
| १ | १ | १ | ० | ३२ | ५ | ३ | ०□, | २ | ० | १२ | ०।ऽ'[5] | | | | |
| १ | ⊥० | ρ० | ० | ५४ | ९ | ४ | ३÷ | ० | ० | ३२ | ६ | ।ऽऽ' | | | |
| १ | १+ | ० | ० | ८७ | १३ | ५ | χ७ | ३ | २ | ६० | १२ | ६ | ०।ऽऽ'[6] | | |
| १ | ० | ० | θ० | १४३ | १८ | ६ | ० | ० | ० | १३४ | ३२ | ६ | » | | |
| १ | १ | १ | १ℨ | २३१§ | २४ | ७ | ११δ | ४ | ० | २५१ | ६० | १२ | ६ | ०।ऽऽ'[7] | |
| १ | ० | ० | ० | ३१६§ | ३५ | ११ | ० | ० | β० | ५०० | १२२ | २० | ० | २४ | |
| १ | १ | ० | ० | ६१८ǂ | ४९ | १५ | २०ω | ८ | ३ | ९११χ | २२१ | ३० | १२ | ६० | |
| १ | ० | ० | ० | ९८६ | ६८ | २० | ० | ० | ψ० | १७५४ | ४२२ | ५४ | ० | १८० | |
| १ | १ | १ | ० | १५८५ $ | ९३ | २६ | ३२ Σ | १२ | ३ μ | ३२०७ | ७५७ | ८६ | ३२ | ३९० | |

* G. H. omit all the signs ।ऽऽ' in this line. [1] H. adds ०ऽ

† H. gives a blank square here and in the next line.

[2] H. omits ०ऽ [3] H. gives ०ऽ' in a square. [4] H. ऽऽ' ०।ऽ

△ G. adds ०।ऽ' [5] G. ।।ऽ' [6] H. ०ऽऽ', ।।, ।। — in three separate squares. [7] H. gives these signs in a square.

‡ H. १ ‖ G. H. २ ¶ H. ० Φ H. २

४• H. gives the following numbers in this line of squares १, १, ०, ०, ०, २०, ४, २, ०, ६, ६ (perhaps the second ६ is intended to be cancelled because of a horizontal stroke at its top.

P.T.O.



ऋतवोऽर्का[1] रदा व्योम रसा वेदाग्निभूमयः ।
भूमीष्वक्षिमिता व्योम खेषवो द्व्यक्षिनन्दकाः ॥१२०॥

वेदाक्षमुनिचन्द्राश्च नगव्योमाश्विवह्नयः ।
दलपा लौ रसाः सूर्या रदा व्योमर्तवस्तथा ॥१२१॥

आकृतिः सेन्दुका इन्दुः साकृतिः[2] सा युगान्विता ।[3]
मुनिसंपुटिता बाणा दगपालिमयो ब्रुवे[4] ॥१२२॥

रसा अर्का नखा व्योम गुणा वेदेन्द्रियाणि च ।
रसा[5] नागा अथो[6] पङ्क्तिलगपैरुपलक्षिता ॥१२३॥

रसाः खमर्काः खं दन्ताः श्रेणी दलगपाह्वया ।
तत्त्वानि खरसाः खेभभूमयो खनवाग्नयः ॥१२४॥

एषा संयोगमेरुस्था लिपिः प्रास्तारिकी परा ।
सुखावबोधहेत्वर्थं राजराजेन कीर्तिता[7] ॥१२५॥

॥ इति संयोगमेरुः ॥१४॥

□ H. omits this square and the zero. ⊥ G. १

ρ H. ४ ÷ H. omits this square and the number ३.

+ H. ० χ H. omits this square and the number ७ as also the last square and no. ६.

θ H. gives १ in this square, omits the tenth square (from left to right) and its zero. gives १३५ in the place of १३४.

» H. adds ।ऽऽ', । in two separate squares.

ℨ H. ० § G. २३२

δ H. omits this square and the number ११ § G. H. ३७६

β H. omits this square and its zero.

ǂ G. ६१९ H. ६०८

ω H. omits this square and the number २०.

χ G. ९२१, H. ९२२ ψ H. omits this square and its zero.

$ H. १५९५

Σ G. ३९, H. omits this square and its relevant number.

μ H. ४३.

[1] G. H. ०र्कं [2] G. H. omit विसर्ग

[3] G. H. युगांचिका [4] A. ब्रुवो

[5] G. H. रसनागा [6] G अथा

[7] A. adds विसर्ग

सर्वसाधारणः [1]पूर्वं प्रस्तारो यो मयोदितः ।
तद्वदेष विधातव्यः खण्डप्रस्तारसंज्ञकः ॥१२६॥

*पञ्चभिर्मेरुभिः पूर्वं दादिहीनादिका भिदाः ।
खण्डिता यन्निवेश्यन्ते खण्डप्रस्तारनामतः[2] ॥१२७॥

तस्मादेष[3] विशेषोऽत्र दादिहीनैकदादिकः ।
नियमोऽङ्गीकृतः सोऽत्र न [4]भङ्क्तव्यः प्रयत्नतः ॥१२८॥

॥ इति खण्डप्रस्तारः ॥१५॥

॥ खण्डप्रस्तारः ॥

| १ | २ | ३§ | ४ | ५ | ६ |
|---|---|---|---|---|---|
| 00S | | | | | |
| 1100 | | | | | |
| 1010 | 10000 | ‖S'1 | S' | S'0 | |
| | | | | 111 | |
| 1001 | ‡01000 | S00 | 1S | 1100 | |
| 0S0 | 00100 | 1S | S1 | 1010 | S1 |
| 0110 | 00010§ | §0S0 | | 1001¶ | 1S |
| 0101 | 00001 | 00S | 111 | 10000 | 10000 |
| †00S | | | | 0110 | 01000 |
| 0011 | | | | 0101 | 00100 |
| | | | | 01000 | 00010 |
| | | | | 0011 | 00001 |
| | | | | 00100 | |
| | | | | 00010 | |
| | | | | 00001£ | |
| | | | | 000000 | |

[1] A. omits अनुस्वार *cf. S. R. V. 377. [2] G. H. ०तातत:
[3] G. H. ०देव [4] A. भक्तव्य: G. भंक्तव्य
† G. adds a horizontal line here dividing this column; ॥δ is written in the vertical order, facing the last two entries in this column; again a horizontal line is drawn closing the entries in this column.
‡ A. 10000.
§ H. 000S0.
§ H. omits columns 3 and 4 here, the entries of column 4 are given in the last column bearing serial no. 5 in H.
‖ G. S. $ G. omits this entry.
¶ H. omits this entry. £ A. G. 0001.



*द्रुतमेर्वादिमेरूणां चतुर्णामथ वक्ष्यते ।
समपङक्त्यादिकोष्ठानां नष्टोद्दिष्टविधिः[1] स्फुटः ॥१२९॥

[2]अत्रैतावतिथः कोष्ठो[3] नष्टः कीदृग्भवेदिति ।
कश्चित् पृच्छति चेत्तस्य ज्ञानोपायोऽत्र वर्ण्यते ॥१३०॥

द्रुतहीनादिभेदानां संख्या [4]पूर्वोक्तरीतितः ।
यस्मात् [5]सुमेरुकोष्ठाङ्काल्लभ्यते तत्र पातयेत् ॥१३१॥

नष्टाङ्कमथ शेषाच्च पात्यावङ्कौ त्रिपञ्चमौ ।
यद्यङ्को न पतत्यस्मात्तदास्मिँल्लभ्यते[6] लघुः ॥१३२॥

परस्मिन्नकृतार्थे तु साकं तेन लघुर्भवेत् ।
अथ चेदकृतार्थौ[7] स्त उभौ ताभ्यां ततो भवेत् ॥१३३॥

लघुरेव विनाङ्केन तेन त्वत्र पुनः स्मृतः ।
परस्मिन्नकृतार्थे तु ग्रहणीयः पुरातनः ॥१३४॥

साकमङ्केन पूर्वेण पतिताल्लभ्यते गुरुः ।
एवं सति निवर्तेत चतुरङ्की तदा परा ॥१३५॥

पतिते पञ्चमे चाथ गुरुरेव प्लुतीभवेत् ।
कोष्ठकाङ्केन पूर्वेण सह चैव निवर्तते ॥१३६॥

रूपपूर्ता पुनः कार्योऽङ्केषु तत्प्राप्तिहेतुषु ।
शेषेष्वेष विधिस्त[ज्]ज्ञैः पञ्चमः शेषतां व्रजेत् ॥१३७॥

[8]गुर्वलाभे त्वपातार्हस्तत एवमिहागतम् ।
तृतीयपञ्चमौ[9] पात्यौ तत आरभ्य एव हि ॥१३८॥

इत्यादिकं तद्विधानं पुनः कार्यं विजानता ।
स्युरङ्काभावतो ग्राह्या लघवस्तालपूर्तये ॥१३९॥

लघौ[10] लब्धे पातितेऽङ्के शेषकोष्ठेन[11] सम्मितम् ।
अधस्तनं कोष्ठयुगं[12] गुरौ कोष्ठचतुष्टयम् ॥१४०॥

* cf. S. R. V 378-408 for 129-75 above.
[1] A. omits विसर्ग [2] A. अत्र तावतिथः [3] A. काष्ठो G. कोष्टा
[4] G. पूक्त० [5] A. ०कोष्ठोका लभ्यते G. ०कोष्ठाकाल्लभ्यते
[6] G. H. ०स्मिन् लभ्यते [7] G. H. ०तार्थो
[8] G. गुरु० (omits लाभे) H. गुरुलाभे
[9] A. ०पंचमौ पांत्यो (पंचमोपांत्यौ?) G. H. ०पंचमो पात्यौ [10] G. H. लघ्वौ
[11] G. links up here the third—fourth feet of verse 141 as शेषकोष्ठांक: शिष्यकाभ्यधिको यदि ।
[12] H. ०युग्मं

प्लुते तु कोष्ठषट्कं च वर्जयित्वा यथाक्रमम् ।
ततस्तत्पूर्वकोष्ठाङ्कः[१] शिष्याङ्काभ्यधिको यदि ॥
तमारभ्य यथापूर्वं [२]तं पुनः पातयेत् स्फुटम् ॥१४१॥

॥ इति द्रुतमेरौ प्रथमपङ्क्तिगतसमकोष्ठनष्टम् ॥१६॥

उद्दिष्टे तु तृतीयोऽङ्को गुरोरंत्यादिहाप्यते[3] ।
प्राग्वन्निवृत्तिरङ्कानां चतुर्णामुपलभ्यते ॥१४२॥

[४]प्लुतात्त्रिपञ्चमौ लभ्यावङ्कौ षण्णामथ स्मृता ।
[५]निवृत्तिरत्र कर्तव्यः पुनरेष विधिर्बुधैः ॥१४३॥

न लभ्यते लघोरङ्को निवृत्तिस्त्वङ्कयोर्द्वयोः ।
लब्धाङ्कयोगतो योऽङ्कः[६] पातयित्वा तमन्त्यतः ॥१४४॥

शेषाङ्कादत्र विज्ञेय उद्दिष्टस्य विनिर्णयः । अथवा ॥
यैरङ्कैर्लभ्यते नष्टं तानङ्कान् [७]पतितानिमान् ॥
[८]अपनीयावशिष्टाङ्कैर्ज्ञेयोद्दिष्टस्य [९]संमितिः ॥१४५॥

॥ [इ]ति प्रथमपङ्क्तिसमकोष्ठनष्टोद्दिष्टे ॥१७॥

विषमे कोष्ठके नष्टं भवेत् सामान्यनष्टवत् ।
[१०]तया रीत्या द्रुते लब्धे शेषं स्यात् समकोष्ठवत् ॥१४६॥

॥ इति प्रथमपङ्क्तिविषमकोष्ठनष्टम् ॥१८॥

उद्दिष्टं समकोष्ठोक्तमत्र ज्ञेयं विचक्षणैः ।
समस्तोद्दिष्टवदिति यदत्रापि तदीरितम् ॥१४७॥

॥ इति विषमकोष्ठोद्दिष्टम् ॥१९॥

॥ इत्यधस्तिर्यक्पङ्क्तिविषमकोष्ठे नष्टोद्दिष्टे ॥२०॥

द्वितीयाद्यूर्ध्वपङ्क्तीनां समानां कोष्ठकेषु तु ।
द्वितीयाधस्तनोऽन्यासां पङ्क्तीनां पात्यतेऽधिकः ॥१४८॥

[११]द्रुतस्त्वपतितात्तत्र [१२]पतिताल्लघुराप्यते ।
महत्त्वमत्र चाल्पस्य नैरन्तर्येण पातने ॥१४९॥

---

[१] A. ० कोष्ठांकाभ्यधिको यदि H. ०कोष्ठांकः शिष्यकाभ्यधिको यदि ।
[२] G. तमुन
[3] G. ०प्यंप्ते
[४] G. पुता त्रि० H. प्लुता त्रि०
[५] G. H. निवत्ति०
[६] G. omits विसर्ग
[७] G. H. पतितांतिमान्
[८] A. अपनीयावाशिष्टांकै० G. H. अपनीयावसि (G. मि)ष्टांकै०
[९] G. सेंमितिः
[१०] G. H. omit this line.
[११] A. द्रुतस्तु पति० G. द्रुतस्व०
[१२] G. ० ल्लपु०



स्वीयपङ्क्तिस्थिता[१] अङ्का रूपस्य परिपूरणे ।
सति प्राग्वन्निवर्तन्ते यथा लेऽङ्कद्वयं गुरौ ॥१५०॥

चतुष्टयं प्लुते षट्कमङ्कानामिति [२]तत्स्थितिः ।
अन्यत्सर्वमधःपङ्क्तिसमकोष्ठकनष्टवत् ॥१५१॥

निवृत्तावत्र चाङ्कानां पुनरेव तथा विधिः ।
स यस्मात् समकोष्ठात् स्यात् कर्तव्यः [3]समकोष्ठकः ॥१५२॥

यस्यां पङ्क्तौ [४]भवेत् सापि पङ्क्तिश्चेद् विषमा तदा ।
विधिर्विषमकोष्ठोक्तः[५] समा चेत् समकोष्ठवत् ॥१५३॥

स एव विषमाध[:]स्थकोष्ठो न पतितो यदि ।
कर्तव्यं तत् क्वचित् कैश्चिदधः सामान्यनष्टवत् ॥
[६]विषमोर्ध्वश्रेणिनष्टमधो[७] विषमनष्टवत् ॥१५४॥

॥ इति ऊर्ध्वपङ्क्तिसमविषमकोष्ठनष्टम् ॥२१॥

[८]यैरङ्कैः पतितैर्नष्टे लभ्यन्ते ये प्लुतादयः ।
तेभ्यस्ते तेऽत्र लभ्यन्ते भेदमुद्दिष्टमाश्रिताः ॥१५५॥

[९]समास्वत्र [१०]विशेषोऽयमेतास्वादिमकोष्ठकः ।
द्रुतहीनो भवेत्तासु [११]पङ्क्तिषूर्ध्वासु यो लघुः ॥१५६॥

अङ्कः [१२]कश्चिदिहैतस्मान्नैव केनचिदाप्यते ।
[१3]लब्धाऽङ्कैक्यमिहान्त्याङ्कात् पातयित्वाऽव-[१४]शिष्टकम् ॥
उद्दिष्टरूपविज्ञानमाह [१५]सर्वधराधिपः ॥१५७॥

॥ इति परपङ्क्त्युद्दिष्टम् ॥२२॥

एवं नष्टं[१६] तथोद्दिष्टं द्रुतमेरोरुदीरितम् ॥१५८॥

॥ इति द्रुतमेरुनष्टोद्दिष्टे ॥२३॥

लघुमेरुगतं नष्टमथ सम्यक्(ङ)निरूप्यते ।
पङ्क्तेरध[:]स्थितायास्तु नष्टाङ्केनोनितो भवेत् ॥१५९॥

यः प्रान्त्यकोष्ठकाङ्कोऽत्र विधिना तस्य शेषतः ।
पूर्वेषां पात्यमानानां द्रुतस्त्वपतिताद्[१७] भवेत् ॥१६०॥

---

[१] G. H. ०गता
[२] A. omits तत्
[3] A. स तु
[४] G. भावेत्
[५] G. H. ०क्तो (समा is omitted)
[६] G. H. ०मोर्ध्वः (add विसर्ग)
[७] A. ०विधो
[८] G. यं रकौः H. यं रंकैः
[९] A. समास्त्वत्र
[१०] G. वित्रोषौ H.विाशाषो (विशोषो)
[११] A. ०मूर्ध्वासु
[१२] G. ०दिदित०
[१3] G. लब्ध्वाकैक्य०
[१४] G. H. ०सि (G. मि)ष्टकः
[१५] A. ०धनाधिपः
[१६] G. नष्टें
[१७] A. omits द्

द्वाभ्यां पूर्वाभ्यामेकेन परेण च सहाप्यते ।
पतिताङ्काद् गुरुस्तस्मिन्[१] पतिते च निरन्तरे ॥
गुरुः प्लुतीभवेदेवं नष्टं प्रथमपङ्क्तिगम् ॥१६१॥
॥ इति लघुमेरौ प्रथमपङ्क्तिनष्टम् ॥२४॥

परासामथ पङ्क्तीनां नष्टे पातो[२] विलोमतः ।
प्राग्द्वितीयं तृतीयाधस्तनमङ्कं च [३]पञ्चमम् ॥१६२॥

एवं[४] [५]निवृत्तेष्वन्येषु शेषेष्वथ पुनर्विधिः[६] ।
सामान्यनष्टवत् प्रोक्ता द्रुतादेः प्राप्तिरत्र तु ॥१६३॥

विशेषोऽयं लघौ[७] लब्धेऽवशिष्टेषु[८] य आदिमः ।
तस्मादधस्तनादङ्काद्विधिः कार्यो विजानता ॥१६४॥

सोऽधस्तात् संस्थितोऽङ्कोऽत्र[९] स्वपङ्क्तौ[१०] यो विधिः स्मृतः ।
प्रवर्तयेत्तमेवेह[११] [१२]पङ्क्त्यङ्काभावतः पुनः॥१६५॥

यावन्त्योऽधस्तनाः श्रेण्यस्तावत्संख्याङ्कसंमिताः ।
लभ्यन्ते लघवो [१३]नष्टं लघुमेरोरुदीरितम् ॥१६६॥
॥ इति लघुमेरुनष्टम् ॥२५॥

सामान्यनष्टवन्नष्टं गुरुमेरावपि स्मृतम् ।
अधःपङ्क्तौ तु गुरुवत् प्लुतलाभ इहेष्यते ॥१६७॥

नष्टे तु परपङ्क्तीनां [१४]तृतीयाऽधस्तनास्पदे ।
पातनीयस्तृतीयोऽङ्कः[१५] पञ्चमाधस्तनास्पदे ॥१६८॥

पात्यते पञ्चमोऽङ्कोऽत्र शेषं तु लघुमेरुवत् ।
लघुमेरौ यथा लब्धे लघौ प्राप्ते तथा गुरौ ॥१६९॥

कुर्यादधोगमं शेषाल्लघुवद् गुरुलम्भनम् ।
अङ्काभावे यथा तत्र लघवो गुरवोऽत्र तु ॥
अधस्तन[श्रे]णिसंख्या[:] प्राप्यन्ते तद्वदेव हि ॥१७०॥
॥ इति गुरुमेरुनष्टम् ॥२६॥

[१] G. ०स्व (स्त्व?)स्मिन्
[२] G. H. ० तौ
[३] G. पंच(omits मं) and adds पप्तं
[४] G. omits अनुस्वार
[५] A. omits ० वृत्ते०
[६] G. ०विधि: (omits रेफ)
[७] G. लघो
[८] G. H. ०सिष्टेशु
[९] G. सांस्थिवोकोऽत्र
[१०] G. ०क्तो
[११] G. ०त्तमिवेह
[१२] G. पंक्त्याकाभावयेतः H. पंक्त्याकाभावतः
[१३] A. नेष्टं
[१४] A. त्रितीया० G. H. तृतीयो०
[१५] G. H. omit विसर्ग (G. ०तीयाक)



प्लुतमेरौ पुनर्नष्टं ज्ञेयं सामान्यनष्टवत् ।
विशिष्यते [१]पुनश्चैतद् द्वितीयादिषु पङ्क्तिषु ॥१७१॥

गुरुमेरुवदत्रापि प्लुते लब्धे पुनः स्मृतम् ।
अधःपङ्क्तिसमारम्भे[२] विधानं सर्वमेव हि ॥१७२॥

अन्त्यैरङ्कैर्यथा दो[३] लो गो वा लब्धः प्लुतीभवेत् ।
तस्याङ्कस्य त्वधःसंस्थैरङ्कैः सार्धमतीत्य च ॥१७३॥

अङ्कषट्कं तद्वदेव प्लुतीभवति सोऽत्र च ।
अधःपङ्क्तौ[४] स्थितैरङ्कैः शेषैरेष पुनर्विधिः ॥
अन्त्यः प्लुतीभवेत् पङ्क्तौ वर्जितायां[५] प्लुतेन हि ॥१७४॥
॥ इति प्लुतमेरुनष्टम् ॥२७॥

लघुमेर्वादिषु प्रोक्तं[६] त्रिषूद्दिष्टं पुरातनैः ।
साधारणोद्दिष्टमिवेत्याह क्ष्मापालपुङ्गवः ॥१७५॥
॥ इति लघुमेर्वादिषु त्रिषूद्दिष्टम् ॥२८॥

[७]द्रुतलघुगुरुशब्दाः सप्लुता मेरुपूर्वा
जगति यमधिकृत्य प्राप्नुयुः सार्थसंज्ञाम् ।
प्रतपनगरिमोर्जद्धैर्यदानातिरेकै-
र्व्यरचि धरणिभर्त्रा तेन तन्मेरुराजिः ॥१७६॥

यमुत्तमं प्रत्ययमामनन्ति धर्मद्रुमस्यात्र विदां वरिष्ठाः ।
[८]सप्रत्ययः प्रत्ययजातमत्रातनोदरिप्रत्यय[९] उर्वरेशः ॥१७७॥

इति श्रीराजाधिराज-[१०]महीमहेन्द्रकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां संगीत-मीमांसायां वाद्यरत्नकोशे घनोल्लासे तालप्रत्ययपरोक्षणं तृतीयं समाप्तम् ॥

---

[१] G. ०श्चैते०
[२] G. H. ०रम्य
[३] G. दौ
[४] G. ०पक्त्यै
[५] G. H. ०नां
[६] G. omits अनुस्वार
[७] G. द्रुतं H. gives the numbers 2 and 1 respectively on लघु and गुरु in order to indicate their intended transposition, gives two vertical strokes on शब्दाः, perhaps to indicate its cancellation and then adds पूर्वाः (G. omits शब्दाः and adds पूर्वाः)
[८] A. सत्प्रथः
[९] A. ०दरी०
[१०] G. H. श्रीकुम्भकर्णमहीमहेन्द्रेण

# तालादि नाम चतुर्थं परीक्षणम्

यः पातालेऽप्यतालस्योत्तालरक्षोगणेशितुः[१] ।
स्वयमेवाभवत्तालस्तमतालं भजे शिवम् ॥१॥

तालयोर्लक्षणं चैव कांस्यतालौ तथैव च ।
† [२]झञ्झातालौ महाघण्टा[3] तथा च क्षुद्रघण्टिका ॥२॥

जयघण्टा च कम्रा च शुक्तिका पट्टवाद्यकम् ।
मञ्जीरः[४] कांस्यवडकस्तुम्बुरुश्चेत्यमी[५] क्रमात् ॥
घनवाद्यस्य भेदा[:]स्युस्तत्रादौ तालक्षणम् ॥३॥

[६]यच्छोधितं वह्निषु कांस्यमग्र्यं
घनं तदाद्या(द्यं?) किल मूर्तमाहुः ।
तदीयनादेषु तदुद्भवत्वात्(द्)
[७]घनाभिधा लाक्षणिकी प्रदिष्टा ॥४॥

*तत् कांस्यकं[८] तालयुगं विदध्यात्
समं[९] सपादाङ्गुलवक्त्रयुग्मम्[१०] ।
सुवर्तुलं पिण्डित ए(मे)तदत्र
यवोन्मितं स्यादिति तालविज्ञाः ॥५॥

पादोनगुञ्जोन्मितमध्यरन्ध्रं
सार्धाङ्गुलोत्सेधवशातिरम्यम् ।
अत्युज्ज्वलं विस्तृतनिम्नमध्यं[११]
कुमारिकायाः स्तनतुल्यरूपम्[१२] ॥६॥

सुजातकार्तस्वरलेपयुक्तं कौशेयनेत्रांशुकजाञ्चलाग्रम् ।
निवेशयेत्तत्र च रन्ध्रयुग्मे [13]रज्जूकृतं तद्विदधीत चास्मिन् ॥७॥

ग्रन्थिं ततो निर्गमनाय रन्ध्र-देशादिहायं बुधसंप्रदायः ।[१४]
आवेष्ट्य तेनाञ्चलदोरकेण प्रदेशिनीं सव्यकरस्य[१५] सम्यक् ॥८॥

---

[१] G. H. ०शतुः
† cf. S. R. VI 15 for 2, 3 above.
[२] A. looks like संज्ञा
[3] G. ०घंट
[४] A. omits विसर्ग
[५] G. ०संबुरु०
[६] A. यछो० G. H. यत् शो०
[७] G. घग्रा०
* cf. S. R. VI. 1170-1205 for 5-45 above.
[८] A. ०जं
[९] A. समां
[१०] G. H. ०युग्मववत्रम्
[११], [१२] G. omits अनुस्वार and ०म्० respectively.
[13] G. रजू०
[१४] A. ०कायः
[१५] G. ०करे म्यक्



आक्रम्य चाङ्गुष्ठतलेन सव्यां प्रदेशिनीमस्य च मध्यमाद्यम् ।
प्रसारयेदङ्गुलिकात्रयं तदूर्ध्वास्यमत्र स्थितताल्मेकम् ॥९॥

संधार्य तिर्यङ्मुखमन्यतालं हस्तेन धार्यं[१] किल दक्षिणेन ।
तलप्रदेशान्तरलम्बमानां चलावलिं संवरणीयमेताम्[२] ॥१०॥

अङ्गुष्ठवत्तर्जनिकाग्रभागे तस्याग्रभागेन ततोऽन्यदीयम् ।
[३]संताडयेन्मध्यमयास्य नाद-परीक्षणं वीक्षणविद् विदध्यात् ॥११॥

शिवो भवेत् स [४]प्रचुरप्रणादः शक्तिः [५]प्रदिष्टाऽल्पितसन्निनादा ।
शिवे भवेत् स्निग्धघनो निनादः [६]शक्तौ ध्वनिस्तद्विपरीतभावः ॥१२॥

धार्यः[७] शिवो दक्षिणपाणिनात्र शक्तिः सदा वामकरेण धार्या ।
एवं कृते स्यात् फलमश्वमेधक्रतूद्भवं दोषमतोऽन्यथा स्यात् ॥१३॥

[८]स्यात्तुम्बरुर्दैवतमत्र युग्मे शिवे[९] शिवः शक्तिरिहापरस्मिन् ।
तालाङ्ककैर्वादनमेतदीयं गुर्वादिभी[१०] राजगुरूपदिष्टम् ॥१४॥

द्रुतादिसिद्ध्यै किल तन्निनाद-धृतिः कृतोर्ध्वाङ्गुलिभिर्मिताऽत्र[११](?) ।
सा कल्पनाकल्पितकल्पवर्जमकल्पिता कल्पमनीषिकल्पैः[१२] ॥१५॥

पाटाः प्रदिष्टा इह सर्ववाद्यसमुद्भवा वाद्यविदां वरेण ॥१६॥
॥ इति तालक्षणम् ॥१॥

तालौ नलिन्या दलसन्निकाशौ विशुद्धकांस्येन विनिर्मितौ च ।
विश्वाङ्गुलीभिर्मितवक्त्रदेशौ समाकृती द्व्यङ्गुलकौ तले स्तः ॥१७॥

मध्येऽङ्गुलेन प्रमितौ विनम्रौ[13] तालोक्तलक्ष्मोदितशेषसंस्थौ ।
रन्ध्रं दधानो मृदुपट्टसूत्ररज्जुप्रबन्धाय च, तत्र पाटाः ॥१८॥

[१४]झनौ कटौ मुख्यतमास्तु वर्णाः पाटान्तराण्यत्र पुनर्वदन्ति ॥१९॥
॥ इति कांस्यतालक्षणम् ॥२॥

एतौ पुनश्चेदधिकौ[१५] भवेतां पुरोदिताद्विस्तरतस्तदेमौ[१६] ।
झञ्झेति पाटाक्षर-[१७]संयुतत्वाज्झञ्झादितालौ गदितौ पुराणैः ॥२०॥
॥ इति [१८]झञ्झातालौ ॥३॥

---

[१] G. धार्ये [२] G. H. ०मेतं [3] G. संतावुपन् [४] G. omits प्रचुर
[५] G. पदिष्टालित० [६] G. श (omits क्तौ) [७] G. ०र्या ।
[८] G. H. ० त्तुंबर० [९] G. शिदे [१०] G. ०दिती
[११] A. H. भिर्यिकात्र G. ०निर्मिकात्र (०निर्मितात्र can also be a possible reading).
[१२] G. ०मनीधिकल्पिः
[13] G. H. विनिम्नौ [१४] G. झोनौ [१५] G. H. ०कैर्भवेतां
[१६] G. ०स्तदोसौ [१७] A. ०संयजत्वा० [१८] G. झझ० H. झंझ०

सुसिद्धकांस्येन विनिर्मितां च विशालवक्त्रां किल[१] चाल्पमूलाम् ।
अष्टाङ्गुलोत्सेधवतीमथार्धाङ्गुलेन पिण्डेन विराजमानाम् ॥२१॥

वण्डं त्रिभृङ्गाकृतिमूललग्नं [२]सबिभ्रती मूलत एव लग्नम् ।
षडङ्गुलं दीर्घतया च पिण्डे अथेष्टदेवध्वजचिह्निताग्रम् ॥
[३]सार्धाङ्गुलं लोहमयं दधाना ला(जा)लाभिधं कीलकमत्र गर्भे ॥२२॥

[४]श्लक्ष्णं घनं दण्डत एव लग्नं लम्बायमानं बिभृयाच्च दण्डे ।
अधोमुखां प्राज्य टणत्कृतीध्वां घण्टां सुरार्चासमये सुवृत्ताम् ॥२३॥

समस्तवाद्यैकमयीं[५] समस्त-सुरप्रियां सुष्ठुनिनादयुक्ताम् ॥
त्रैर्वाणकानामिह वादनीयामिमां मुनीन्द्राः सततं गृणन्ति ॥२४॥
॥ इति घण्टालक्षणम् ॥४॥

कृशानुनिर्दग्धविशुद्धकांस्य-[६]संभूतिराजत्पुटयुग्मकम्राः ।
कनिष्ठिकापर्वसमीकृतार्घ-प्रमाणदेहाः सुघनाः समाश्च ॥२५॥

कर्कन्धुकाबीजसमानपिण्डाः श्लक्ष्णा मनोज्ञाः परिवर्तुलाश्च ।
मण्डूकवक्त्राकृतिवक्त्रदेशा[७] गर्भे दधानाः किल लोहगोलान् ॥२६॥

शिखासु रन्ध्रद्वितयोपनीतबन्धार्थरज्जूपचितोर्ध्वदेशाः[८] ।
स्युः क्षुद्रघण्टाः[९] किल घर्घराह्वा एता पुनर्घर्घरिकाभिधानाः ॥२७॥
॥ इति क्षुद्रघण्टिकालक्षणम् ॥५॥

श्लक्ष्णां समां वृत्तघनां सुकांस्यजातां वितस्तिद्वितयप्रमाणाम् ।
पिण्डे तथार्धाङ्गुलसंमितां च प्रान्ते द्विरन्ध्रीं दधतीं मनोज्ञाम् ॥२८॥

घण्टामिमां वैजयिकीं जयादिं तद्रन्ध्रविन्यस्तसुसूत्ररज्जुम् ।
धृत्वा करे वादनतत्त्वविज्ञो वामे ततो दक्षिणपाणिदेशे ॥२९॥

स्थितेन कोणेन तु डेंकृतीति पाटाक्षरोल्लासितनिःस्वनाढ्याम् ।
तथैव पाटान्तरवर्णवर्णां[१०] विचित्रवर्णामिह वादयेत्ताम् ॥३०॥

तालादिकेष्वत्र सुजातहेमपत्रोपलेपां विदधीत विद्वान्[११] ॥३१॥
॥ इति जयघण्टालक्षणम् ॥६॥

---

[१] A. किल तास्यमूलां, G. H. कलनास्यमूलां (G. मूला)
[२] A omits सबिभ्रती······लग्नम् and अथेष्ट······ग्रम्
[३] G. H. सार्धा(H. ०र्धां)गुलां
[४] G. H. omit श्लक्ष्णं······लग्नं
[५] A. G. omit अनुस्वार [६] G. H. ०संभूत०
[७] G. ०वक्त्रादेशा [८] G. ०तोर्ध्वदिशाः
[९] G. ०घंटां [१०] A. ०वर्ण्यां [११] G. ० न्न



वेणूद्भवं खादिरकाष्ठजं वाङ्गुलद्वयं विस्तरतोऽस्य[१] दैर्घ्ये ।
स्यादंगुलैर्द्वादशभिः[२] समेतं पर्यन्ततो[३] न्यूनतमं मनाक् स्यात् ॥३२॥

मध्यस्थपिण्डात् किल [४]कम्रिकाणां [५]चतुष्टयं श्लक्ष्णतमं यथावत्[६] ।
तद्वादयेत् पाणियुगे प्रतिस्वं[७] धृत्वा युगं कम्रिकयोस्तया च ॥३३॥

सांगुष्ठमध्यांगुलिमूलदेशे धृत्वैकिकां तस्य युगस्य चान्याम् ।
प्रान्ते तयोः किंचिदविश्लथां तां कुर्याद् बुधो वादनमेतयोश्च ॥३४॥

तत्कम्रिकावादनमेतदर्हैः कम्पेन कार्यं मणिबन्धनस्य ।
पाटाः प्रदिष्टाः पुनरत्र मुख्याः किरीटिकाः सन्त्यपरेऽपि पाटाः ॥३५॥

अनामिकां दक्षिणहस्तसंस्थां कृत्वान्तराले किल कम्रिकाणाम् ।
अंगुष्ठघृष्टेस्तलघातनेन वामस्य वाद्यं परमेकमाहुः ॥३६॥
॥ इति [८]कम्रिकालक्षणम् ॥७॥

स्याल्लोहजा कांस्यभवाथ शुक्तिः सर्पाकृतिस्त्र्यङ्गुलविस्तराढ्या ।
अध्यर्धहस्तद्वितयप्रमाणाऽधस्ताद्विभिन्ना च विराजिता च ॥३७॥

तिर्यक्-[९]स्थरेखाभिरिहैतदीयं कोणेन [१०]लौहेन सुरेखितेन ।
मृगस्य शृङ्गाकृतिनर्जुना च विघर्षणाद्वादनमाहुरार्याः ॥३८॥

पाटास्तथोक्ताः [११]किरिकोटिवर्णा [१२]यक्षास्तथा(ऽ)स्यामपि दैवतानि ।
रुद्राधिदैवं किरिकिट्टकं तु लोके पुनः केचिदिमां गृणन्ति ॥३९॥

प्रयोजनं स्याद्यति[१३]-[१४]मात्रमत्रावबोधनं बुद्धिमतामभीष्टम् ॥४०॥
॥ इति शुक्तिवाद्यलक्षणम् ॥८॥

[१५]श्रीपर्णिकाकाष्ठसमुद्भवत्वात् श्लक्ष्णं समन्ताच्चतुरस्रशोभि ।
विस्तारतो हस्तमितं च दैर्घ्ये द्वात्रिंशता वाङ्गुलकैः प्रमाणात् ॥४१॥

स्यात्[१६] त्रिंशता वांगुलकैर्मितं तत् पट्टाभिधं वाद्यमिदं [१७]वदन्ति ।
[१८]तल्लोहनिर्मापितपट्टिकाभ्यामूर्ध्वं [१९]तयाधः प्रविभज्य[२०] बद्धम् ॥४२॥

---

[१] G. H. omit थ [२] G. omits विसर्ग
[३] G. H. पर्यन्तयोर्न्यून० [४] A. कम्रिणां च [५] G. चतृ०
[६] G. यथा स्यात् (H. gives व on the top of स्या)
[७] G. ०सृं [८] G. कत्रिका० [९] G. ०स्वरेखा०
[१०] G. H. लोहेन [११] S. R. किरिकिट्ट० [१२] G. ०स्तायामपि
[१३] A. ०द्यदि [१४] A. ०मत्रमात्र G. ०मात्रमत्रो
[१५] A. leaves space blank for श्री [१६] A. omits त्
[१७] G. H. गृणन्ति [१८] G. ०निर्मापत० [१९] G. तयोधः
[२०] G. omits ज्य

तद्भूरिभिर्घर्घरिकाभिधाभिरलंकृतं बन्धनमापिताभिः ।
यत्नेन संधार्य च वक्षसोऽग्रे जान्वोस्तथा मध्यत एतदत्र[१] ॥४३॥

स्वल्पेन तत्सिक्थकलेपनेन लिप्तं [२]प्रवीणैरिह वाद्यते च ।
करस्थशाखाग्रिमभागघृष्टे[3] पाटाः पुनर्मुख्यतमा[४] भवन्ति ॥४४॥

कखौ [५]चडौ वाथ[६] रटावितीमे तथैव पाटाः पटहोद्भवाश्च ।
हौडुक्किकाश्चाप्यथ दैवतानि सप्तर्षयो राजवरोदितानि ॥४५॥

॥ इति पट्टवाद्यलक्षणम् ॥९॥

विस्तारतः [७]स्याच्चतुरङ्गुलोऽत्र मञ्जीरकस्तालसमानसंस्थः ।
कुरङ्गश्रृङ्गोचितकोणकेन वामेन हस्तेन च वाद्यतेऽसौ ॥४६॥

॥ इति मञ्जीरः ॥१०॥

अत्युच्चपृष्ठो वदने विशालः स्यात् पद्मिनीपत्रसमानकान्तिः ।
विन्यस्य रन्ध्रेऽस्य च सूत्रदोरं विधृत्य [८]तस्मिन्निखिलोत्सवेषु ॥४७॥

प्रवाद्यते कांस्यवडो विचित्रं दण्डेन पाटैर्विविधैरुपेतः ॥४८॥

॥ इति कांस्य-[९]वाद्यलक्षणम् ॥११॥

अधोमुखं ताम्रमयं विदध्यात् कुम्भं सुशोभं समलंकृतं च ।
सुवर्णलिप्तं च ततोऽङ्गुलीषु निःक्षिप्य मुद्रात्रितयं प्रतिस्वम् ॥४९॥

कृतान्तरालं पुनराभिरत्र कुर्याद् [१०]बुधस्तुम्ब(म्बु)रुवादनं च ॥५०॥

॥ इति [११]तुम्बुरुवाद्यलक्षणम् ॥१२॥

इत्थं मया वाद्यमिदं घनाढ्यं समासतो लक्षणतोऽभ्यधायि ।
अन्यान्यपि प्राज्ञतमैरनेन पथोहनीयानि विमृश्य लोकान् ॥५१॥

॥ इति घनवाद्यलक्षणं [१२]समाप्तम् ॥

देशे देशे जनैः स्वस्वकरविवशगो[१३] मार्ग्यते [१४]यः प्रणीतो
मार्गः प्रोत्तालरूपैः[१५] षडपि न वितथा[ः]प्रत्ययाः षट्सु यस्य ।
कर्मस्वत्यद्भुतत्वाद्दिवि भुवि सदने योगिनां तत्प्रियाभि-
र्गीयन्ते तेन राज्ञा घनमखिलमदोऽगादि विश्वोपकृत्यै ॥५२॥

---

[१] G. ०दात्र [२] G. प्रवीणो [3] G. ०ष्टो
[४] G. ०र्मुतमा [५] A. H. घटौ G. वाखो षटो
[६] G. H वाद्य० S. R. कखचास्थडरटाः पाटाः (VI· 1205)
[७] A. ०च्चतुरो० [८] G. ०न्नखिलेत्सवेषु [९] G. H. ०वड०
[१०] G. बधसुंबधसुंबरु [११] G. H. ०तुंबरु० [१२] G. H. omit समाप्तम्
[१३] Folio 15 or 434 in G. ends at विव०; there is a change in handwriting in the next folio beginning with ०शगो
[१४] A. यत् [१५] A. ०रूपे



इति [१]कामगिरौ विनिर्मिते सहजं राजशिरोमणिर्व्यधात् ।
घनवाद्यनिरूपणं घनाघननिस्वानसमाननिस्वनः ॥५३॥

[२]इति श्रीवनदेवनिजगणेन जगदीश्वरीकामेश्वरीचरणकिंकरेण श्रीकामाक्षागिरिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनित-कीर्तिपूरपराजिताचलनायकेन संगमनीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण मदन(G. दमन०)पुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमण-परिशीलनपरिप्राप्तशाकम्भरीपरितोषित-शाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरि(G. adds शिखर)परिवारिताञ्जनाद्रिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनर्धषितमहोरगपुरेण श्रीवनदेवस्वामिप्रसादरचना(A.leaves space blank for रचना)-परपरमेश्वरेण श्रीत्रियं-(त्र्यं)बकेश्वरसन्निधिविनिर्मिति(त)कीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्री(G. omits श्री)कामाक्षागिरिनवीननिर्मितिपराजितसुमेरुणा श्रीमहिषाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराज-महाराणाराजश्रीविराजमानश्रीतामराजेन्द्रनन्दनेन महाराज्ञीश्रीसौभाग्यवती-जसमाम्बिकाहृदय-नन्दनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवतीलघुमादेवीहृदयाधितायेन महाराजाधिराजश्रीकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीत-

---

[१] H. कुम्भलमेरुनिर्मिते

[२] H. reads the colophon as follows :—

इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण मालवांभोधिमाथमंथमहीधरेण योगिनीप्रसादासादितयोगिनीपुरेण मंडलदुर्गोद्धरणोद्धृतसकलमंडलाधीश्वरेण अजयमेरुजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकंभरीरमणपरिशीलनपरिप्राप्तशाकंभरीतोपितशाकंभरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनर्धषितनागपुरेण अर्बुदाचलग्रहणसंदर्शिताचलाद्भुतप्रतापेन गुर्ज्जराधीशधीरत्वोन्मूलनप्रचंडपवनेन श्रीमत्कुंभलमेरुनवीननिर्मितपराजि[त]सुमेरुमेरुणा श्रीचित्रकूटभौमस्वर्गतायथार्थीकरणरचितचारुतरपथेन मेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातंगपंचाननेन प्ररूढपत्रयवनदवदहनदवानलेन प्रत्यर्थिपृथिवीपतितिमिरततिनिराकरणप्रौढप्रतापमार्त्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दंडकोदंडमंडिताखंडभुजदंडेन भूमंडलाखंडलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेश्वरेण गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पनाकल्पद्रुमेण वसुंधरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिंकरेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन राजगुर्वादिबिरुदावलीविराजमानेन राजाधिराजमहाराणाश्रीमोकलेन्द्रनंदनेन राजाधिराजश्रीकुंभकर्णेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे घनोल्लासे तालादिलक्षणं नाम चतुर्थं परीक्षणम् । उल्लासश्च समाप्तः ॥

H. ends here and reads सर्वपत्र ३१९ at the end.

मीमांसायां* वाद्यरत्नकोशे घनोल्लासे तालादिपरीक्षणं चतुर्थम् (G. तालादिलक्षणं नाम चतुर्थं परीक्षणं) । उल्लासश्च तृतीयः समाप्तः ॥

---

* The new hand in G. ends here at folio 16 or 435, the next folio begins with वाद्यरत्नकोशे etc. in the normal handwriting.

# चतुर्थोऽवनद्धोल्लासः

## पुष्करवाद्यलक्षणं नाम प्रथमं परीक्षणम्

स्पर्धाबन्धाभिरामामहमहमिकया षाण्मुखीं स्तन्यपाने
कृत्वा मातः पराचीं द्विपमुचितलसत्पुष्करं मां गृहाण ।
इत्थं हास्यावनद्धाननमभिवदनं वीक्ष्य यं शैलपुत्री
जाता विस्मेरितास्या स भवतु भवतां स्फारसाम्राज्यभूत्यै[1] ॥१॥

अथाभिदध्महे सम्यगवनद्धस्य लक्षणम् ।
मृदङ्गस्त्रिविधस्तत्र भरतोक्तैर्विविच्यते[2] ॥२॥

नानापाटाश्च वाद्यानि प्रबन्धा[3] वाद्यसंश्रयाः ।
लक्षणं पटहस्याथ *हुडुक्का करटा घटः ॥३॥

घढसो[4] ढवसो [5]ढक्का [6]कुडुक्का कुड(डु)वा(वोऽ)पि च ।
रुञ्जा डमरुकं डक्का मण्डिडक्का [7]च डक्कुली ॥४॥

[8]सेल्लुका झल्लरी भाणस्त्रिवली दुन्दुभिस्तथा ।
भेरी निःसान(ण)त(तु)म्बक्यो गुणा दोषाश्च काष्ठजाः ॥५॥

चर्मणो लक्षणं तस्य गुणदोषाश्च तत्त्वतः ।
वाद्यस्य गुणदोषाश्च वादकस्याथ[9] ते अपि ॥६॥

दशहस्तगुणाश्चैवावनद्धपदसंश्रिताः ।
तत्रादावुच्यते लक्ष्म मृदङ्गस्य क्रमागतम् ॥७॥

*रक्तचन्दनतो बीजवृक्षाद्वा खदिरादपि ।
स्वर्णाक्तकांस्यतो वापि मृदङ्गः क्रियते बुधैः ॥८॥

†एकविंशत्यङ्गुलः[10] स्याद्दैर्घ्ये [11]मध्ये पृथुर्मनाक्[12] ।
हरीतक्याकृतिः पिण्डे स्यादर्धाङ्गुलसम्मितः ॥९॥

---

[1] G. ०भूत्ये [2] A. ०विरच्यते [3] G. adds अनुस्वार

* cf. S. R. VI 12-14 for 3-5 above.

[4] A. घटसो G. घटासो [5] G. डका

[6] A. हुडुक्का G. कुडक्का [7] G. omits च डक्कु०

[8] A. सेलुका [9] A. looks like वादकस्याप्यते G. वादकस्यापि

* cf. S. R. VI 1019, 1031.

† cf. S. R. VI 1020-32 for 9-29 above.

[10] A. omits विसर्ग [11] A. मध्य० [12] G. ०मंनाक

मीमांसायां* वाद्यरत्नकोशे घनोल्लासे तालादिपरीक्षणं चतुर्थम् (G. तालादिलक्षणं नाम चतुर्थं परीक्षणं)। उल्लासश्च तृतीयः समाप्तः ॥

---

* The new hand in G. ends here at folio 16 or 435, the next folio begins with वाद्यरत्नकोशे etc. in the normal handwriting.

# चतुर्थोऽवनद्धोल्लासः

## पुष्करवाद्यलक्षणं नाम प्रथमं परीक्षणम्

स्पर्धाबन्धाभिरामामहमहमिकया षाण्मुखीं स्तन्यपाने
कृत्वा मातः पराचीं द्विपमुचितलसत्पुष्करं मां गृहाण ।
इत्थं हास्यावनद्धाननमभिवदनं वीक्ष्य यं शैलपुत्री
जाता विस्मेरितास्या स भवतु भवतां स्फारसाम्राज्यभूत्यैं[1] ॥१॥

अथाभिदध्महे सम्यगवनद्धस्य लक्षणम् ।
मृदङ्गस्त्रिविधस्तत्र भरतोक्तेर्विविच्यते[2] ॥२॥

नानापाटाश्च वाद्यानि प्रबन्धा[3] वाद्यसंश्रयाः ।
लक्षणं पटहस्याथ *हुडुक्का करटा घटः ॥३॥

घढसो[4] ढवसो [5]ढक्का [6]कुडुक्का कुड(डु)वा(वोऽ)पि च ।
रुञ्जा डमरुकं डक्का मण्डिडक्का [7]च डक्कुली ॥४॥

[8]सेल्लुका झल्लरी भाणस्त्रिवली दुन्दुभिस्तथा ।
भेरी निःसान(ण)त(तु)म्बक्यो गुणा दोषाश्च काष्ठजाः ॥५॥

चर्मणो लक्षणं तस्य गुणदोषाश्च तत्त्वतः ।
वाद्यस्य गुणदोषाश्च वादकस्याथ[9] ते अपि ॥६॥

दशहस्तगुणाश्चैवावनद्धपदसंश्रिताः ।
तत्रादावुच्यते लक्ष्म मृदङ्गस्य क्रमागतम् ॥७॥

*रक्तचन्दनतो बीजवृक्षाद्वा खदिरादपि ।
स्वर्णाक्तकांस्यतो वापि मृदङ्गः क्रियते बुधैः ॥८॥

†एकविंशत्यङ्गुलः[10] स्याद्दैर्ध्ये [11]मध्ये पृथुर्मनाक्[12] ।
हरीतक्याकृतिः पिण्डे स्यादर्धाङ्गुलसम्मितः ॥९॥

---

[1] G. ०भूत्ये [2] A. ०विरच्यते [3] G. adds अनुस्वार
* cf. S. R. VI 12-14 for 3-5 above.
[4] A. घटसो G. घटासो [5] G. डका
[6] A. हुडुक्का G. कुडक्का [7] G. omits च डक्कु०
[8] A. सेलुका [9] A. looks like वादकस्याप्यते G. वादकस्यापि
* cf. S. R. VI 1019, 1031.
† cf. S. R. VI 1020-32 for 9-29 above.
[10] A. omits विसर्ग [11] A. मध्य० [12] G. ०मंनाक

अङ्गुलैर्मनुभिर्वामे वदने दक्षिणे पुनः ।
[१]वह्नीन्दुभिर्मितस्त्रिंशदङ्गुलो दैर्घ्यतस्तु यः ॥१०॥

अङ्गुलेन मितः पिण्डे [२]वामास्ये द्वादशाङ्गुलः।
दक्षिणार्धे[३] मितः[४] [५]सार्धैरेकादशभिरङ्गुलैः ॥११॥

अभ्यधुर्मर्दलं[६] केचिल्लक्षितं भिन्नलक्षणा(णम्?) ।
सार्धहस्तमितायामं सपादाङ्गुलिपिण्डकम् ॥१२॥

त्रयोदशाङ्गुलं वामे[७] वदने दक्षिणे पुनः ।
द्वादशाङ्गुलकं मध्ये पृथुलं प्रकृताविव ॥१३॥

वक्त्रयोश्चर्मणी स्यातां वक्त्रादेकाङ्गुलाधिके ।
ते चत्वारिंशता रन्ध्रैरेकैकाङ्गुलकान्तरैः ॥१४॥

अन्ते युक्ते घने स्यातामेतयोर्दार्ढ्यहेतवे[८] ।
प्रान्तयोर्वक्त्रसंलग्ने पार्श्वयोश्चर्मणी दृढे ॥१५॥

रन्ध्रस्थाने[९] तद्वदेव रन्ध्रैस्तावद्भिरन्विते ।
विष्वगेकाङ्गुलं त्यक्त्वा छेतव्ये [१०]मध्यतस्तथा ॥१६॥

यथावशिष्यते तत्रैकैकिका [११]वक्त्रदेशगा ।
अङ्गुलान्तरवत्[१२] स्वेषु [१३]वध्रं रन्ध्रेषु [१४]निःक्षिपेत् ॥१७॥

सीवनक्रममाश्रित्य विग्निकाः कर्कराभिधाः ।
प्रोतोर्ध्वायः(धः)स्थिता [१५]दृष्टोदरपृष्ठविभागकाः ॥१८॥

तेषु रन्ध्रेषु [१६]निःक्षिप्य तथा बन्धो विधीयते ।
यथास्यं परितः स स्याच्चातुर्गुण्यमुपागतः[१७] ॥१९॥

[१८]वध्ररन्ध्रद्वयेनाथ विग्निकास्थानवर्तिना ।
कार्यो गोमूत्रिकाबन्धो यथा कवलचर्मणी ॥२०॥

---

[१] A. ०भिर्मिते० G. निर्मित०
[२] A. वाम स्याद्
[३] G. ०णास्यो
[४] G. adds पिण्डे which does not fit in the metre.
[५] G. ०रेकाश० (omits द)
[६] G. omits अनुस्वार
[७] G. वापि
[८] G. ०र्दाढ्र्य०
[९] A. ०स्था द्वदेव G. स्थाते तद्व०
[१०] A. मध्यम०
[११] G. वक्र०
[१२] G. ०वस्त्रेषु
[१३] G. रंध्रं
[१४] A. निक्षिपेत् (omits विसर्ग)
[१५] A. पृष्टोदरपृथ्वी०
[१६] A. निक्षिप्य
[१७] G. ०तम्
[१८] G. वध्रांरध्र०



परस्परं पिनद्धास्ये दृढे[१] स्यातामुभे अपि ।
[२]मुरजस्य त्रिभिर्वध्रैर्मध्यगाढं[३] प्रवेष्ट(श)येत् ॥२१॥

[४]आस्योपकण्ठकुण्डल्यौ बद्धव्ये धातुनिर्मिते ।
तत्र वामास्यकुण्डल्यां स्निग्धां पट्टमयीं नवाम् ॥२२॥

कच्छामष्टाङ्गुलायामां सांचलद्वितयां शुभाम् ।
निवेश्य दक्षिणास्यस्थकुण्डल्यां तां निवेशयेत् ॥२३॥

कट्यां शोभानुगां न्यस्येत्(द्)द्विगुणत्वमुपागताम् ।
अथ वामेऽस्य वदने पिण्डिकां पूरिकाकृतिम् ॥२४॥

भक्तस्य [५]भूतिमिश्रस्य मर्दनाच्चिक्कणीकृताम् ।
निवेश्य बोहणाख्येन स्वल्पेनास्यं[६] च दक्षिणम् ॥२५॥

लिम्पेदेवं भवेन्नादो [७]मेघनिर्घोषसुन्दरः ।
अत्राह भरताचार्यो [८]मार्जन्यां(नां) मृत्तिकामयीम् ॥२६॥

तटिनीतटदेशस्था श्यामा श्लक्ष्णा [९]जलावहा ।
[१०]विशर्करा च वितुषा वितृणा मृदुला न वा ॥२७॥

[११]मृदुला पिच्छलत्वादिदोषराशिविवर्जिता ।
मृत्तिका यवगोधूममाषचूर्णेन मिश्रिता[१२] ॥२८॥

ध्वनिगाम्भीर्यपोषा च मुनिप्रवरसम्मता ।
मायूरी चार्धमायूरी तथा कार्मारवीत्यपि ॥२९॥

एताः पार्थक्यतो हेतुः स्वराणामपि तद्विदः ।
गान्धारो वामवदने पुष्करे दक्षिणे पुनः ॥
षड्जस्वरः प्रजायेत मायूरी मार्जना यदा ॥३०॥

॥ इति मायूरी ॥१॥

यदा स्यादर्धमायूरी षड्जो वामे तदा भवेत् ।
ऋषभो दक्षिणास्ये तु वाद्यमानो भवेत् सदा ॥३१॥

॥ इत्यर्धमायूरी[१३] ॥२॥

एषैव विपरीतोद्यत्स्वरा[१४] कार्मारवी मता ॥३२॥

॥ इति कार्मारवी ॥३॥

---

[१] G. दृढ
[२] A. मुरुजस्य
[३] G. ०र्वध्रेर्मध्यं
[४] A. अस्योप०
[५] A. भूमि०
[६] G. ०नास्यं (omits स्वल्पेना०)
[७] G. मेपघ०
[८] G. मार्जुना
[९] G. जलवहा
[१०] G. विर्शर्करा
[११] G. मृद्वला
[१२] G. ०त
[१३] G. ०यूरां
[१४] G. ०तोद्य अरा

भरतो विशिनष्ट्येताः[१] पुनर्ग्रामविभेदतः[२] ।
मायूरी मध्यमे ग्रामे सा स्यादर्धपवाविमा ॥३३॥

उभयोर्ग्रामयोरिष्टा बुधैः कार्मारवी [३]प्रथा ।
[४]एतासूक्तस्वरोत्पत्तिः[५] शिष्या(क्षा)भ्यासेन जायते ॥३४॥

[६] किंचिच्छैथिल्यमाश्रित्य [७]किंचिदायततामपि ।
[८]निष्पीडनं च वध्राणां कृत्वा [९]किंचित् प्रदर्शयेत् ॥३५॥

त्रिष्वप्येतेषु संप्रोक्ता देवता नन्दिकेश्वरः ।
[१०]पाटाक्षराणि जायन्ते वक्ष्यमाणानि वाद्यतः ॥३६॥

*वादको मुखरी गीतानुगः प्रतिमुखर्यपि ।
इत्थं चतुर्विधत्वेन प्रोक्तो[११] मौरजिको[१२] बुधैः ॥३७॥

[१३]अथैषां क्रमतो वक्ष्ये लक्षणानि समासतः ।
वादो जल्पो वितण्डेति वादभेदास्त्रिधा मताः ॥३८॥

वीतरागकथा वादः स च पक्षपरिग्रहः ।
स्वपक्षसाधनं तद्वत् परपक्षस्य दूषणम् ॥३९॥

विजिगीषुकथा जल्पः प्रतिपक्षे स्वसाधिते ।
जल्प एव वितण्डा स्यादिति तल्लक्षणत्वतः ॥४०॥

वाद एव प्रधानत्वादत्र सम्यक् प्रपञ्च्यते[१४] ।
[१५]विधेयं वादनं तत्र [१६]विज्ञैस्त्राटनसंज्ञकम् ॥४१॥

जायेत[१७] मर्दले नादो यो बोहणविनाकृतः[१८] ।
स देहडगित्यादि-[१९]स्त्राटनस्तालवर्जितः ॥४२॥

तथातिशयतः कुर्याद्धस्तौ वादनकोविदः ।
बोडवाडं[२०] घनरवमेवं संज्ञां गतौ पुनः ॥४३॥

१ G. ०नद्येताः
२ G. ०विभागतः
३ G. पृथा
४ A. एषासूक्त० G. एतसूक्त०
५ A. omits विसर्ग
६ A. केचि०
७ G. कंचिदा०
८ A. निपीडनं G. निःपीडनं
९ A. कांचित्
१० G. पादावक्षराणि
* cf. S. R. VI 1039-54 for 37-58 above.
११ G. ०क्तौ
१२ G. ०कौ
१३ G. अप्येषां
१४ G. ०च्यते
१५ G. विधियं
१६ G. विजै०
१७ G. जायते
१८ G. ०कृतिः
१९ G. ०त्राटन (omits स्)
२० A. बोटवाडं, G. बोटवादं, S. R. वोडवाडं



कुर्याद् रंहवडावाख्यं प्रमुखं मुक्तशब्दकम् ।
उंयार(उधार)स्थापनं पश्चाद् वादको वादयेद् यथा ॥४४॥

पुटयोरुभयोर्दत्वा बोहणं वाममाननम् ।
गड्दत्योमिति पाटाद्यं वादयेद्दक्षिणं पुनः ॥४५॥

गड्दग्दामिति पाटार्णलक्षितं [१]तत्परं पुनः ।
ताले मध्यलयोपेते [२]द्वितीयाख्येऽस्य वक्त्रयोः ॥४६॥

द्वयोर्नादसमायोगं कुर्याद् वाद्यविचक्षणः ।
दलत्रयमयोच्चोच्चं[३] पृथक् कुर्याद् विलम्बिते ॥४७॥

लये मध्ये द्रुते चैतल्लये च [४]क्रमतस्तथा ।
एकद्वित्रिकयोङ्कारररचितग्रहमोक्षयुक् ॥४८॥

स्थापनं प्रोच्यते त[ज्]ज्ञैर्यत्स्थानत्रयशुद्धिमत् ।
मधुरं वाद्यते हस्तद्वयेनालप्तिवच्च[५] तत् ॥४९॥

ग्रहमोक्षोऽन्तरे पश्चात्योङ्कारबहुलं भवेत् ।
चतुरस्रत्र्यस्रमिश्रखण्डाख्या ये[६] पुरोदिताः ॥५०॥

[७]तालास्तन्मध्यतः केनचिदेकेन ततः[८] स्मृतौ ।
कर्तव्यौ टाकणीवादौ तयोर्भेदद्वयं मतम् ॥५१॥

जोडा चैकसरा चेति तयोर्लक्षणमुच्यते ।
टाकि(क)ण्येकसरा चेति तथैकसरटाकणी ॥५२॥

जोडैकसरजोडा च तथैकसरवादकः ।
जोडावाद इमे भेदाः पृथक् त[द्]द्वयगोचराः ॥५३॥

तत्र सा टाकणी ज्ञेया यस्तालेऽष्टकलादिके ।
समस्य वहनीं कृत्वाऽभीष्टताललयानुगः ॥५४॥

वाद्यखण्डः कृतो[ऽ]खण्डोऽसकृत्करणतः कृतैः ।
ज्ञेया [१०]सैकसरैकद्वित्रिचतुर्वारमादरात् ॥५५॥

शुद्धाभ्यसनतस्तैस्तु प्रकारो वादने यथा ।
दृष्टः श्रमवहन्याख्यस्तथैव प्रतिपाद्यते ॥५६॥

१ G. तत्पुरं
२ G. द्वितीख्ये (omits या)
३ G. ०मयोच्चाच्यं
४ G. क्रमशस्तु या
५ A. ०वाच्च
६ G. यो
७ G. तला०
८ G. omits विसर्ग
९ G. जेया
१० G. सेकसेरैक०

तधियोटेंमिमे वर्णाः पूर्वं द्वैगुण्ययोगिनः ।
ततस्त्रिगुणतां नीताश्चातुर्गुण्यमितास्ततः[1] ॥५७॥

वाद्यन्ते, श्रमवहन्यस्या[2] उदाहृतिरुच्यते ।
यथा—[3]तधियोटें । तत । धिधि । थो थो टें टें । ततत धिधिधि
थो थो थो । टें टें टें । ततत्तत । धि धि धि धि ।
थो थो थो थो । टें टें टें टें ।
इति श्रमवहनीं कृत्वा तथैकसरटाकणी ॥५८॥

यथा—तकधीकट इत्येष [4]वाद्यखण्डः प्रवाद्यते ।
अष्टकृत्वोऽष्टासु कलास्वेषोऽपि द्विःकृतो यदि ॥
सैव जोडेति गदिता सैवैकसरजोडिका ॥५९॥

यथा—तकधिकट १ [5]कतधिकट २ कतधिकट ३ कतधिकट ४
कतधिकट ५ कतधिकट ६ कतधिकट ७ कतधिकट ८
इत्यष्टौ वाद्यखण्डान् अष्टासु कलासु अभ्यस्य सैव द्विवारं जोडा ॥

टाकणीवत् समस्तं प्राक् खण्डं कृत्वा ततः परम् ।
खण्डं खण्डं द्विद्विवारं[6] वाद्यते वाद्यसंज्ञके ॥
अत्रैकसरजोडाख्यं टाकणीवत् स्मृतं यथा ॥६०॥

दंदां ॥१॥ टिरि किटि[7] रिकि ॥२॥ गड्दज्झें गड्दज्झें झें[8] ॥३॥ थरिक्क थरिक्क[9] ॥४॥ गण गण गण ॥५॥ थरिकथरिगड ॥६॥ दत्थ दत्थ ॥७॥ थरिगड थरिगड ॥८॥ दगड दगड ॥९॥ थरिधि थरिधि ॥१०॥ थरि थरि ॥११॥ तगंड्दक् ॥१२॥ थरिथरि ॥१३॥ तक्क तक्क ॥१४॥ धिकट धिकट ॥१५॥ तक्कट गड्दक् ॥१६॥

इति षोडशकले ताले षोडशसु कलासु षोडश-[10]खण्डकं वाद्यखण्डं कृत्वा षोडशखण्डान् द्विद्विः कुर्यात् (द्) इत्येकसरवादः ॥

स एव [11]द्विःकृतो जोडा ॥
*एतेषां सर्वखण्डानां त्यागं कुर्याद् विचक्षणः ।
ततो दिगि दिगि [12]ना(ता?)टवाधाद्यं विदधीत हि ॥६१॥

[1] G. ०स्तः [2] A. ०वहन्येषास्या G. ०वहन्येषा स्यादुदा०
[3] G. तथिरियोटें [4] A. वाद्यः
[5] G. तक० in all the 8 phrases. S. R. तकधिकट तकधिकट धिकटतक तकधिकट तकतकधि कटधिकट कतधिकट (only 7 phrases instead of 8)
[6] G. omits वारं [7] G. सारिकिं [8] G. omits second झें
[9] G. omits second थरिक्क [10] G. खण्ड [11] A. द्वि (omits विसर्ग)
* cf. S. R. VI 1055-67 for 61-76 above.
[12] G. नावां



ना(ता?)टवाधः स विज्ञेयो यः खण्डो द्रुतमानतः ।
वर्णैर्दिगिदिगीत्येतैरभ्यस्तो वाद्यकोविदैः ॥६२॥

अन्ये वाद्यप्रकारा ये लक्ष्यन्ते लक्ष्यवर्त्मनि ।
तेऽमुना वर्त्मनाभ्यस्या वादकेन जिगीषुणा ॥
इति वादस्य [1]लक्ष्मैतद् यो जानाति स वादकः ॥६३॥

॥ इति वादकः ॥१॥

वाद्यप्रबन्धनिष्णातो गीतवादनचञ्चुरः ।
लास्यशिक्षाविशेषज्ञः [2]सुरेखोऽन्तर्मुखः कृती ॥६४॥

नर्तक्यर्धाङ्गमिव यो रङ्गभूमौ प्रवर्तते ।
प्रेक्ष्यमाणमुखाम्भोजो वादकैर्वाद्यकर्मणि ॥६५॥

धुर्यलावण्यमधुरो वेषभूषाविशेषवित् ।
मुखरी [3]गदितो राज्ञा मुखपाटवपण्डितः ॥६६॥

[4]छन्दोभिः सुमनोहरैः श्रवणयोः[5] पीयूषधारोत्करैः-
र्वर्णैः प्रासविभूषितैर्यतिलयस्वस्थानसंवेशनैः ।
ताले कुत्रचिदीप्सिते कविरिव प्रायः प्रबन्धान् सुधी-
धुर्यः कोऽपि [6]कवित्तकार-नृपतिर्बध्नाति [7]बन्धोद्धुरान् ॥६७॥

॥ इति मुखरी ॥२॥

सोऽयं गीतानुगः प्रोक्तो यो वै [8]वादनमात्रतः ।
शुद्धच्छायालगे गीते वर्णान् कठिनकोमलान् ॥६८॥

प्रौढिमाधुर्यसंयुक्तान् समांश्च विषमानपि ।
मन्द्रगं मध्यगं नादं तारगं चानुगच्छति ॥६९॥

उद्ग्राहे च तथाऽऽभोगे जक्काप्रहरणे तथा ।
वैकल्पिकेऽथवा गीतं[9] समग्रं संश्रितेऽथवा ॥७०॥

प्रातिलोम्यानुलोम्येनोभयेनाथ समुच्छ्रिते[10] ।
निःसारौ सालगे गीते व्यस्ते वा सकलेऽपि च ॥७१॥

[11]दक्षोऽनुगमने तद्वद् ग्रहे मोक्षे क्रमेण च ।
कुर्यात्तकारथोङ्कारौ वैचक्षण्यमुपागतः ॥७२॥

॥ इति गीतानुगः ॥३॥

[1] G. लक्ष्यैतद् [2] G. सुरेखांत० [3] G. omits ग०
[4] G. छदेतिः [5] A. omits विसर्ग [6] A. कवि चकार G. कविं तकार
[7] G. बंधा० [8] G. वोदन० [9] G. गीते
[10] A. समुच्यते [11] A. दक्षानु०

[1]प्रोक्तः प्रतिमुखर्याख्यो हीनो मुखरिणो मनाक् ॥७३॥

॥ इति प्रतिमुखरी ॥३॥

॥ इति चतुर्विधमार्दलिकलक्षणम् ॥

वर्णव्यक्तिसुरेखिते[2] मधुरतौद्धत्ये च वाद्याश्रिते
विज्ञातृत्वमभिज्ञता श्रमजयो गीतानुगत्वं[3] ततः ।
[4]प्रावीण्यं मुखवाद्यपाटवविधौ रक्तिर्लघुत्वं करे
तालज्ञत्वलयज्ञते यतिगतिर्वाद्यावधानस्थितिः ॥७४॥

सन्(द्)धातावजिकाऽनुवृत्तिपरता लोके च शास्त्रे[5] ज्ञता
सन्मार्दङ्गिकवर्य[6] एष गदितो राज्ञा गुणानां [7]गणः ।
एतस्यैव विपर्ययेण गदितो दोषाकरस्तद्गतो
[8]येन स्यादिह संस्थितेन सहसा मार्दङ्गिको निन्दितः ॥७५॥

॥ इति मार्दङ्गिकगुणदोषाः ॥

द्वित्रा यत्र मृदङ्गधारिण इह स्युर्वा त्रिचत्वाश्चतु-
[9]पञ्चा(?)वा नृपवृन्दसेवितपदस्तद्वृन्दमत्राभ्यधात् ।
प्राधान्येन च तेन तन्मुखरिणः कार्यानुवृत्तिः सदे-
त्येवं मौरजिके गणे निगदिते[10] सत्सम्मतं लक्षणम् ॥७६॥

॥ [11]इति मौरजिकवृन्दलक्षणम् ॥

येन यावननिर्बद्धान्मोचितं पुष्करत्रयम् ।
तेन पुष्करनेत्रेण निबद्धं पुष्करत्रयम् ॥७७॥

इति श्रीराजाधिराज-[12]कालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीत-मीमांसायां वाद्यरत्नकोशे [13]अवनद्धोल्लासे पुष्करवाद्यलक्षणं प्रथमं परीक्षणं समाप्तम् ॥

---

1. G. omits प्रोक्तः……॰मार्दलिकलक्षणम्
2. A. ॰सुरेखतो
3. A. G. गीतानुगा(G. ॰ग॰)त्युक्तता
4. A. प्राविण्यं
5. G. शास्त्रज्ञता
6. A. ॰वर्ग
7. A. गुणः
8. A. एन
9. पञ्च would be the correct reading, but it does not accord with the metre.
10. G. निगदितं सत्सं (omits मतम्)
11. G. omits इति……लक्षणम्
12. G. ॰श्रीकुम्भकर्ण
13. G. आनद्धो॰

# पाटा नाम द्वितीयं परीक्षणम्

यत्पाटपाटवाः सन्तो मुनयः संश्रितव्रताः ।
भान्ति[1] पाटाक्षराणीव [2]व्यापकत्वमुपागताः ॥१॥

वाद्यमानेषु वाद्येषु ये वर्णाः स्युः स्वभावतः ।
पाटास्ते तानथो वच्मि [3]सर्ववाद्यसमाश्रयान् ॥२॥

*तत्र कादिचतुष्कं च तटवर्गभवा दश ।
रहौ च षोडशेमे[4] स्युर्वर्णा व्यापकसंज्ञकाः ॥३॥

प्रतिस्वमधिकाः सन्ति केषुचित् कतिचित् स्फुटाः[5] ।
तानपि व्याहरेत् सम्यक् [6]प्रोतरूपाः परस्परम् ॥४॥

†स्वरैर्योगमयोगं[7] च यथायोगमवाप्यते ।
अनेकधाऽऽत्मना भान्ति [8]टङ्कैरुट्टङ्किता इव ॥५॥

क्रमव्युत्क्रमयोगेन चित्रगुम्फमवापिताः[9] ।
[10]आनन्त्यादेवमेतेषां सामस्त्येन निरूपणे ॥६॥

[11]अशक्यत्वेन वर्ण्यन्ते प्राधान्यादिह केचन ।
पञ्चभ्यः पञ्चवक्त्रस्य वक्त्रेभ्यः संभवत्वतः ॥७॥

तत्र मुख्यतया पञ्च पञ्चत्रिंशत्तया स्थिताः[12] ।
हस्तपाटत्वमप्येषां हस्तसंभूतितो मतम् ॥८॥

त एवं तलपाटाः[13] स्युस्तलसंयोगसंभवाः ।
तानुत्प्रेक्ष्य यथावर्णं[14] चत्वारो नन्दिनोदिताः ॥९॥

स्युरेकविंशतिर्हस्तपाटा वाद्यसमाश्रयाः ।
षोडशान्ये[15] हुडुक्कायां प्रायिकत्वे व्यवस्थिताः[16] ॥१०॥

---

1. G. भांरि
2. G. व्यापकमुपांगताः (Leaves a blank for त्व)
3. G. सर्वे

* cf. S. R. VI-822

4. G. षोडशस्ते
5. G. स्फुटम्
6. G. प्रात॰

† cf. S. R. VI-823 for 5, 6 above.

7. G. ॰प्रयोगं
8. G. टंकि॰
9. G. ॰गुफमथापि वा
10. G. अनित्यादेव॰
11. G. अशक्यत्वेऽपि
12. A. स्थितौ
13. A. omits विसर्ग
14. G. ॰वर्णे
15. G. ॰शोन्ये
16. G. ॰स्थितः

हस्तपाटा अपाटाख्या अष्टौ विषमसंज्ञिनः ।
स्यातामलगपाटौ द्वौ द्वौ पाटौ चित्रसंज्ञिनौ ॥११॥

एवमष्टाशीतिरिमे सारग्राहितयोदिताः[१] ।
अथैषां क्रमतो वक्ष्ये [२]लक्ष्मोद्देशपुरःसरम् ॥१२॥

*सद्योजाताद् वामदेवादघोराख्यान्मुखादपि[3] ।
तत्पुरुषसंज्ञकाद् वक्त्रादीशाना[त्] स्यादनुक्रमात् ॥१३॥

नागबन्धस्वस्तिकश्चालग्नः शुद्ध्यभिधस्ततः ।
समस्खलितसंज्ञश्च पञ्चभ्यः पञ्च निःसृताः[४] ॥१४॥

†पाटास्ततः समस्तेभ्यो मुख्यतैषां[५] व्यवस्थिता[६] ।
एतेषु देवता ब्रह्मविष्णुशर्वरवीन्दवः[७] ॥१५॥

एते पञ्चापि सप्तत्वं[८] पृथक्त्वेन प्रपेदिरे ।
पञ्चत्रिंशत्ततोऽभूवन् तद्विविच्य प्रदर्श्यते ॥१६॥

‡[९]नागबन्धश्च पवनस्तथैकैकसराभिधौ ।
ततो [१०]बुःसरसंचारविक्षेपाः प्रथमे भिदाः ॥१७॥

स्वस्तिकस्य विवर्ताः[११] स्युः[१२] [१३]स्वस्तिको [१४]बलिकोहलः ।
फुल्लविक्षेपकुण्डलीविक्षेपश्च तथैव च ॥१८॥

संचारविलिखी(खली)खण्डनागबन्धश्च पूरकः ।
अलग्नो[त्]सारविश्रामा [१५]विषमाद्य[ा] खली सरी ॥१९॥

स्फुरी स्फुरणकश्चेति सप्ता(प्त)लग्ने भिदा मताः ।
[१६]शुद्धिः स्फुरणोत्फुल्लौ[च]वलनावघटौ पुनः ॥२०॥

नतस्तकारो माणिक्यवल्ली शुद्धेर्भिदा मताः ।
समस्खलितके भेदाः समस्खलितसंज्ञकः[१७] ॥२१॥

---

१ A. omits विसर्ग  २ A. ०द्देशः G. ०द्देशे

* cf. S. R. VI-830, 831 for 13, 14 above.

३ G. ०न्मुखा अपि  ४ A. ०स्मृताः  † cf. S. R. VI--832

५ A. ०तेषां  ६ G. adds विसर्ग

७ A. ०र्बिन्दवः G. रवीन्दवी  ८ G. सप्तद्वं.

‡ cf. S. R. VI 833-839 for 17-23 above.

९ G. नोग०  १० A. टुसर०  ११ A. omits विसर्ग

१२ G. omits विसर्ग  १३ G. सुस्तिको

१४ A. नल०  १५ G. विषमाद्यु०

१६ G. omits this line and the next one.  १७ G. ०काः



विकटः[१] सदृशस्तद्वत्खली[२] चाडुखली ततः ।
अनुच्छल्लश्च खुत्तश्च हस्तपाटाः क्रमादमी ॥२२॥

पञ्चत्रिंशत् समाख्यातास्तलपाटाश्च ते अपि ।
अथोदाह्रियते [3]सम्यक् पाटसन्ततिरादितः ॥२३॥

[४]ये पताकादयो हस्ता नाटचशास्त्रे व्यवस्थिताः ।
वाद्ये यथोपयोगं ते व्रजिष्यन्ति तथा स्फुटम् ॥२४॥

प्राकटचमुपयास्यन्ति लक्षणादेव तु स्वयम् ॥२५॥

*तद्यथा—

टनगिन । गिननगि ॥ इति †नागबन्धः ॥१॥ ननगिड । गिडदगि ॥ इति पवनः ॥२॥ गिडगिडदन्था[५] ॥ इत्येकः ॥३॥ किटतत[६] ॥ इत्येकसरः[७] ॥४॥ नखुनखु[८] ॥ इति बु [:] सरः ॥५॥ खिरतकिट्ट[९] ॥ इति संचारः ॥६॥ थोंगि थोंगि[१०] ॥ इति विक्षेपः ॥७॥

इति सद्योजातोदभवाः सप्त [११]हस्तपाटाः ॥१॥

ततकिटकि ॥ इति स्वस्तिकः ॥१॥ [१२]ता हन्ता ॥ इति बलिकोहलः ॥२॥ [१३]थोंगिन थों थोंगि ॥ इति फुल्लविक्षेपः ॥३॥ थों थों गों गों[१४] ॥ इति कुण्डलीविक्षेपः ॥४॥ थोंगिण-तन्ना[१५] ॥ इति संचारविखली[१६] ॥५॥ किटथोंथों गिन खौ ख (S.R. खें खें) ॥ इति खण्डनागबन्धः ॥६॥ टकुझेंझें ॥ इति पूरकः ॥७॥

इति वामदेवोद्भवाः सप्त हस्तपाटाः ॥२॥

---

१ G. ०विकटाः  २ S. R. ०पाटखली  ३ G. तस्मिन्  ४ A. ए

*cf. S.R. VI pp. 400-402 for pp. 173, 174 of the text.

†G. adds गि गि, टनिगि in two lines within a rectangle in between नाग० and बन्धः in the second line from top and after इत्येकरस० in the third line from above; the विसर्ग of ०रस is given after this rectangle.

५ S. R. ०दत्था, adds a third गिड०, A. G. add विसर्ग ।

६ A. ०ततः G. ०तत् ।  ७ G. ०रसः ।  ८ G. omits second नखु ।

९ A. खरत० G. खिरतखिरत०, S. R. खिरटकिट ।

१० G. थोगि थोगि, S. R. थोंगि थोंथि ।  ११ A. हस्ता ।

१२ A. ता हीता, S. R. थों हन्तां ।

१३ A. omits second थों, G. omits अनुस्वार on the three थों s; S. R. थोंगिन (three times).

१४ G. omits the second गों ।

१५ A. G. add य and थ respectively before थोंगिण०; S.R. ०तत्ता ।

१६ A. ०विलखी०, S. R. ०विलिखी ।

नगगिड गिडदगिद[१] ॥ इत्यलग्नः ॥१॥ [२]दथरिक कथरिकि ॥ इति उसारः (इत्युस्सारः) ॥२॥ तकिधिकि[3] ॥ इति विश्रामः ॥३॥ टगनुगु[४] ॥ इति [५]विषमलखी (S.R. ०खली), विषम(स्ख ?)लितो वा ॥४॥ [६]खिरितु ॥ इति सरी ॥५॥ खिरि[७] ॥ इति स्फुरी ॥६॥ नरकि थेरिकि[८] ॥ इति स्फुरणः ॥७॥

॥ [९]इत्यघोरोद्भवाः सप्त हस्तपाटाः ॥३॥

[१०]दरगिडगिडदगिदा ॥ इति शुद्धिः ॥१॥ टटकुटट ॥ इति [११]स्वरस्फुरणः ॥२॥ ननगिन खरि खरि ॥ इति [च्]छल्लः[१२] ॥३॥ [१३]दखदखखें ॥ इति [१४]वल्लभः (वलनः)॥४॥ [१५]थोगिनगि ॥ [१६]इत्यवघटः ॥५॥ तत्ता ॥ इति तकारः ॥६॥ धिधि ॥ इति माणिक्यवल्ली ॥७॥

॥ इति तत्पुरुषोद्भवाः सप्त हस्तपाटाः ॥४॥

तझें[१७] तझें झें ॥ इति समस्खलितः, समस्खली वा ॥१॥ [१८]गिरिग्डु गिरिग्डु ॥ इति विकटः ॥२॥ कणकणकि ॥ इति सदृशः ॥३॥ [१९]धिधिकि [२०]धिधिकिटकि ॥ इति खली[२१], स्खलितो वा ॥४॥ [२२]दिगिनगि [ दिगिनगि ] ॥ इत्यड्डखली[२३], अड्डस्खलितो वा ॥५॥ [२४]थरकट [ थरकट ] ॥ इत्यनु[च्]छल्लः ॥६॥ दोनकट[२५] [ दोनकट ] ॥ इति खुत्ता (S.R. खुत्तः) ॥७॥

इति(ती)शानोद्भवाः सप्त हस्तपाटाः ॥५॥

इति सदाशिवपञ्चवक्त्रोद्भवाः पञ्चत्रिंशद्धस्तपाटाः । तलपाटाश्च ॥१॥

---

[१] G. ०गिर्ड, S. R. ०गिदा ।
[२] G. दथरिकि दथरिकि, S. R. दत्थरिकि दत्थरिकि ।
[3] S. R. repeats तकिधिकि । [४] S. R. टगुनगु टगुनगु ।
[५] G. विषमखाली विषमखलिख्या वा ।
[६] A. विचरितु, S. R. खिरितु खिरितु; G. adds 2 after खिरितु, perhaps to indicate its repetition.
[७] S. R. repeats खिरि । [८] A. ०रकि० । [९] G. इत्यवोरो० ।
[१०] A. दरि० . [११] G. स्फुरणः । [१२] S. R. उच्छल्लः ।
[१3] G. दखदखें, S. R. दखें दखें दखें खे । [१४] G. वल्भः, S. R. वलितः ।
[१५] S. R. थों गिनगि थों गिनगि । [१६] G. अवघटः ।
[१७] A. adds one झे । [१८] G. गिरिगु ग्रिग्ड, S. R. गिरिग्ड गिरिग्ड ।
[१९] S. R. घिघिकिटकि । [२०] G. घिकिवकि । [२१] A. खल्ली ।
[२२] A. G. add 2 after दिगिनगि perhaps in order to indicate its repetition; S. R. also repeats the phrase.
[२3] A. ०खल्ली ।
[२४] S. R. घरकट (phrase repeated), A. G. add 2 in order to indicate the repetition of the phrase.
[२५] A. G. add 2, S. R. दोंनकट (phrase is repeated).



*कोणाहतश्च संभ्रान्तो विषमार्धसमाविति ।
चत्वारो हस्तपाटाः स्युर्नन्दिकेश्वरसम्मताः[१] ॥२६॥

उद्देशक्रमतो लक्ष्मैषामपि प्रतिपाद्यते ।
कनिष्ठाङ्गुष्ठयोगेन शेषाङ्गुलिविवर्तनात् ॥२७॥

कोणाहतो हस्तपाटः परिज्ञेयो बुधैर्यथा ।
खुंखुंधरि खुंखुंधरि करगिड करगिड ॥२८॥

॥ इति कोणाहतः ॥१॥

सर्वाङ्गुल्यप्रघातेन सर्वाङ्गुलिविवर्तनम् ।
यत्र पाटे[२] भवेत् सोऽत्र संभ्रान्तः कथितो यथा ॥२९॥
दरगिड २ गिरिगिडिद[3] २[४] दणकिट मटटकु ॥

॥ इति संभ्रान्तः ॥२॥

वलनं मणिबन्धस्य पताकस्य [५]तु कम्पनम् ।
कम्पनं चरणस्यायं पाटोऽत्र विषमो [६]भवेत् ॥३०॥

यथा—दह्लें २ खुं खुं दह्लें २ [७]कति २ ॥ इति विषमः ॥३॥

विपर्यासेन तस्यैव भवेदर्धसमो यथा ॥३१॥
दरगिड गिगिरिगिडिगदि[८] ॥ दें थों गि २ द ॥

॥ इत्यर्धसमः ॥४॥

॥ इति नन्दिकेश्वरोक्ताश्चत्वारो हस्तपाटाः । [९]तलपाटाश्च ॥२॥

*[१०]उत्फुल्लखलकश्चैव पाण्यन्तरनिकुट्टकः ।
दण्डहस्तः पिण्डहस्तो युगहस्तोर्ध्वहस्तकौ ॥३२॥

[११]स्थूलहस्तोऽर्धार्धपाणिः[१२] पार्श्वपाण्यर्धपाणिकौ ।
कर्तरीसमकर्तर्यौ तथा विषमकर्तरी ॥३३॥

समपाणिश्च विषमपाणि[:]स्यात् पाणिहस्तकः ।
नागबन्धावघटकौ स्वस्तिकश्च समग्रहः ॥
इत्येकविंशतिर्हस्तपाटाः[१3] स्युर्मुरजादिषु[१४] ॥३४॥

---

* cf. S. R. VI 851-54 for 26-31 above.
[१] G. ०भाषिताः । [२] G. repeats पाटे । . [3] G. and S. R. ०डद ।
[४] S. R. does not repeat this phrase.
[५] G. adds पुं before कंपनम् । [६] G. omits भवेत् ।
[७] G. कति (omits 2) । [८] G. omits ०डिगदि । [९] G. ताल० ।
* cf. S. R. VI 841-844 for 32-34 above. [१०] G. उत्फुल्लः
[११] G. स्थूलहस्ताः पिण्डहस्तो……०हस्तकौ (repeated from verse 32); again पिण्डहस्तोर्ध्वार्धपाणिः etc.
[१२], [१3] A. omits विसर्ग [१४] G. ०र्मुरुजादिषु

यथा—

†अलपद्मेन हस्तेन स्यादुत्फुल्लो नखाहतेः[1] ॥३५॥

यथा—कर्ज्ञें[2] ॥ इत्युत्फुल्लः ॥१॥

क्रमेण प्रसृताङ्गुष्ठशुकतुण्डेन वाद्यते ।
विरलाङ्गुलिभिर्वाद्यं प्राहुस्तं [3]खलकं बुधाः ॥३६॥

यथा—[4]दां गिड गिडदां गिडदां ॥ इति खलकः ॥२॥

तर्जन्यङ्गुष्ठपातेन यत्र दक्षिणहस्ततः ।
सरेफवामहस्तेन क्रमव्युत्क्रमयोगतः ॥
वाद्यते वाद्यमुक्तोऽसौ पाण्यन्तरनिकुट्टकः ॥३७॥

यथा—[5]दां गिड दां खरिक्कि दां खरि धुदां दां खरि खरि दां गिडि दां ॥
॥ इति पाण्यन्तरनिकुट्टकः ॥३॥

पताकारेफहस्ताभ्यामूर्ध्वघातः क्रमाद्यदा ।
क्रियते दण्डहस्तोऽसौ पाटः पाटविदोवितः ॥३८॥

यथा—[6]दां थर कट दां खरि खरि दां ॥ इति दण्डहस्तः ॥४॥

[7]व्यापृ(प्रि)येते समं यत्र [8]हस्तौ [9]रेफोर्ध्वहस्तकौ ।
स पिण्डहस्तो विज्ञेयो वाद्यविद्याविशारदैः ॥३९॥

[यथा—] [10]थरकट थरकट झें झें ॥ इति पिण्डहस्तकः ॥५॥

हस्ताभ्यां यत्र [11]रेफाभ्यामूर्ध्वघातद्वयं पृथक् ।
विधीयते यदा वाद्ये युगहस्तः प्रजायते ॥४०॥

[यथा—] [12]झें झें दां दां ॥ इति युगहस्तः ॥६॥

यदोर्ध्वघातः क्रियते दक्षिणेन तलेन हि ।
तदोर्ध्वघातो विज्ञेयो दांत्रयेण गिडद्वयात् ॥४१॥

[यथा—] [13]गिड गिड दां दां [दां] ॥ इत्यूर्ध्वहस्तः ॥७॥

† cf. S. R. VI 855-870 for 35—55 of the text.
[1] A. ०हतः [2] G. कज्जें, S. R. कन्हें
[3] G. may be read as षजुकं or षज्जकं
[4] G. दों गिड दां गिड दां, S. R. गिड दगिदा
[5] A. omits यथा.........गिडिदां, S. R. दगिडदां खरिक्कदां
[6] A. omits दां.........दां [7] G. व्याप्रियते [8] G. रेफौ
[9] A. रेफार्घ G. हस्तोर्ध्व
[10] A. omits थरकट......झें, S. R. थरिकटझें थरिकटझें [11] A. रेफोम्या०
[12] A. omits झें......दां, S. R. द्रें द्रें दां दां
[13] A. omits गिड......दां, S. R. दर गिडदां दां



[1]स्थूलहस्तस्तदा ज्ञेयो यदा वाद्यपुटद्वयम् ।
ऊर्ध्वघातद्वयं कृत्वा तलहस्तेन हन्यते ॥४२॥

यथा ॥ [2]खुं खुं दां ॥ इति स्थूलहस्तः ॥८॥

यत्र प्रहन्यते वाद्यमर्धार्धहस्तयोर्द्वयोः ।
अर्धार्धपाणिमाचष्ट विगष्ट[3]-स्पष्टजंत्रवान् ॥४३॥

[यथा—] खुं दां २ ॥ इत्यर्धार्धपाणिः ॥९॥

पार्श्वपाणौ नखाग्रेण वाद्यं धीरैः प्रवाद्यते ॥४४॥

[यथा—] [4]थररग डव रगडवगडवग
॥ इति पार्श्वपाणिः ॥१०॥

अग्रेणैकस्य हस्तस्य घातात् स्यादर्धपाणिकः ॥४५॥

[यथा—] [5]दगड दगड थरगड दरगड ॥ इत्यर्धपाणिः ॥११॥

कर्तरी वामहस्तेन चञ्चलाङ्गुलिना हतेः ॥४६॥

यथा ॥ [6]तिरिटिरि टिरि किट थों [7]डिगिद नर [8]टिरि किटझें झें, न किटट[9] ॥
॥ इति कर्तरी ॥१२॥

समघातात् कर्तरीभ्यां कराभ्यां समकर्तरी ॥४७॥

[यथा—] [10]झेनकिटत तरकिटि किटझें थोदिगिद तिरि टिरि किट
॥ इति समकर्तरी ॥१३॥

[11]विषमा कर्तरी द्वाभ्यां ताडनात्[12] क्रमतो मता ॥४८॥

[यथा—] [13]टिरिटिरियोंदिगिद । किटिझेंझेंनकि ॥ इति विषमकर्तरी ॥१४॥

अङ्गुष्ठाङ्गुलिसंहत्या पीडयेतां करौ यदा ।
युगपत् पुटयोर्द्वन्द्वं समपाणिस्तदा मतः ॥४९॥

[यथा—] [14]दांगिड गिडदां दां ॥ इति समपाणिः ॥१५॥

[1] G. हस्तहस्त० [2] G. खुं ३ दां, S. R. खुं खुं द
[3] A. adds अनुस्वार
[4] A. omits थर......दग, S. R. थरगिड दगिड दगिड दगिड
[5] A. omits दगड......गड, S. R. दगिड दगिड दरगिड दरगिड
[6] A. omits ति [7] A. दि [8] G. किरि
[9] S. R. टिरि टिरि टिरि किटथों दगिदां तिरि टिरि तकि किट
[10] A. omits झेनकिट.........किट, S. R. झिनकिट कनकिट किटझें थों दिगिद तिरिटि तिरिटिकि
[11] A. वेषमा [12] A. omits त्
[13] A. omits टिरि.........नकि [14] A. omits दांगिड......दांदां

तमाहुर्विषमं पाणिं व्यत्ययाद् व्यापृतौ करौ ।
साङ्गुष्ठाङ्गुलिभिर्वाद्यं यस्मिन् क्रमतया हतः ॥५०॥

[यथा—] [1]दांदांगिड गिडदांदां ॥ इति विषमपाणिः ॥१६॥

पाणिहस्तो भवेदेष यत्र स्याद् विरलाङ्गुलिः ।
समपाणिः स्फुरन् वाद्ये[2] इति वाद्यविदो विदुः ॥५१॥

[यथा—] [3]तरगड दरगड त दरगड तगड दगड गड ॥ इति पाणिहस्तः ॥१७॥

व्याप्रियेते करौ यत्र विपर्यासात् पुटद्वये ।
तन्नागबन्धमाचष्ट प्रत्येकं वा पुटद्वयम् ॥
कराभ्यां ताडयेद्यत्र नागबन्धो भवेदसौ ॥५२॥

[यथा—] [4]टनगिनगिन गिननगिड गिडगगि ॥ इति नागबन्धः ॥१८॥

पुटमेकैकपाणिश्चेत् [5]साङ्गुष्ठाङ्गुलिभिः क्रमात् ।
तलेन हत्वा प्रहरेत् पाटः सोऽवघटो मतः ॥५३॥

[यथा—] [6]ननगिड गिडदगि टनगिन गिननगि ॥ इत्यवघटः ॥१९॥

स्वस्तिकौ चेत् करौ भूत्वा पुटमेकं प्रयत्नतः ।
निहन्यातां स्वस्तिकं तं स्वस्तिकृज्जगतोऽवदत् ॥५४॥

[यथा—] [7]तकटतकटतक ॥ इति स्वस्तिकः ॥२०॥

सममेव तलाभ्यां चेत्[8] करयोः पुटघातनम् ।
समग्रहं परे प्राहुर्व्यङ्गुष्ठाङ्गुलिके तले ॥५५॥

[यथा—] [9]तकट तकट तट ॥ इति समग्रहः ॥२१॥

॥ इत्येकविंशतिर्हस्तपाटाः ॥३॥

*उल्लोलः पाण्यन्तरश्च निर्घोषः[10] खण्डकर्तरी ।
दण्डहस्तः समनखो बिन्दुर्यमलहस्तकः ॥५६॥

रेचितो भ्रमरो विद्युद्विलासश्चार्धकर्तरी ।
अलग्नको[11] रेफ[:]समपाणिस्तु[12] परिवृत्तकः ॥५७॥

[1] A. omits दांदां……दांदां
[2] G. वाद्यै
[3] A. omits तरगड……गड, S. R. तरगिड दरगिड
[4] A. and S. R. omit टन……गगि
[5] G. सांगुलिभिः
[6] A. omits ननगिड……नगि
[7] A. omits तकट……तक, S. R. तकिटतकिटतकि
[8] G. omits त्
[9] A. omits तकट……तट, S. R. तकिट किटतट
* cf. S. R. VI 844-846 for 56-58 above.
[10] A. omits विसर्ग
[11] A. अलग्नो
[12] A. G. समपाणी तु



इति षोडश पाटाः[1] स्युः सर्ववाद्योपयोगिनः ।
प्रायेणैतान् [2]प्रयुज्यन्ते हुडुक्कायां मुनीश्वराः ॥५८॥

†अथोदाहरणं तेषां वक्ष्ये लक्ष्मपुरस्सरम् ।
दक्षिणः प्रतिलोमेनाव्यवस्थेन युतो यदि ॥५९॥

अङ्गुष्ठेन तथा वामः सोच्छ्वासो यत्र कर्मणि ।
करस्तं[3] पाटमाचक्षुरुल्लोलं[4] पाटवेदिनः ॥६०॥

दक्षिणोल्लोलहस्तेन सान्तराङ्गुष्ठयोगिना ।
सोल्लासेन तु वामेन केचिदुल्लोलमूचिरे ॥
मध्ये पुटं परे प्राहुर्दक्षिणाङ्गुष्ठघाततः ॥६१॥

यथा ॥ [5]ह्लें था ह्लें था थां ह्ले ॥[6]इत्युल्लोलः ॥१॥

दक्षोऽङ्गुष्ठविनाभूतो[7] (तः) पौनःपुण्ये(पुन्ये)न पीडयेत् ।
वामस्तु स्वं पुटं हस्तो हन्ति पाण्यन्तरस्तदा ॥६२॥

अर्धार्धाङ्गुष्ठहननात् संहताङ्गुलिचालनात् ।
परे पाण्यन्तरं प्राहुरपरे त्वन्यथा जगुः ॥६३॥

व्यङ्गुष्ठो दक्षिणो हस्तो हेतुः पाण्यन्तराद्भवेत्[8] ।
विश्लिष्टाङ्गुलिसंचारमङ्गुलार्धार्धताडनम् ॥
पाण्यन्तरस्य जनकं भिन्नलक्ष्मतया यथा ॥६४॥
[9]नखें ३ खें ३ नखें ३ [10]खेंद खुंद ॥ इति पाण्यन्तरः ॥२॥

निर्घोषं पाटमाचक्षुः[11] कोणाघातेन तद्विदः ॥६५॥

[यथा—] नखखियों थों दिगि [12]दथों दिगि दथों दिगि ॥ इति निर्घोषः ॥३॥

अङ्गुष्ठेन करो दक्षो विरलाङ्गुलिसंहतिः ।
हन्ति वाद्यपुटं यत्र वामहस्तो निपीडयेत् ॥
तत्र संपद्यते पाटः खण्डकर्तरिसंज्ञकः ॥६६॥

[यथा—] दां[13] खुखुदां २ खुखुग्रहें[14] थें टें झें हें झें हें गिथों टें ॥ इति खण्डकर्तरी[15] ॥४॥

[1] A. omits विसर्ग
[2] A. प्रयुञ्जन्ते G. प्रयुंज्यन्ते
† cf. S. R. VI 871-886 for 59-78 of the text.
[3] G. करस्थं
[4] G. ०माचख्यु०
[5] A. झें थां थां थां थां झें
[6] S. R. इति लोलः
[7] G. ०विनाविनाभूतैः पोनः
[8] G. ०रोद्भवे
[9] G. नखं
[10] A. खें दुखु खुंद
[11] G. ०चख्यः
[12] S. R. दा and ends with it.
[13] A. adds १ after दां
[14] S. R. ०गहें थों टझें दें झें दों थां
[15] A. ०रि

अङ्गुल्यग्रैर्विनिष्पीड्य पुटमङ्गुष्ठताडनात् ।
वामनिष्पीडनाच्चापि दण्डहस्तः प्रजायते ॥६७॥

[यथा—] [1]खुं ४ झेंद्र २ टिरि ३ ॥ इति दण्डहस्तः ॥५॥

यत्राङ्गुलिनखाघातैर्दृश्यते समता बुधैः ।
पाटवर्णसमूहस्य पाटः[2] समनखस्तु सः ॥६८॥

[यथा—] [3]हरहर तरकिट धिधिकट तकिधिकि तकिधिकि हर ॥ इति समनखः ॥६॥

वामेन पाणिना यस्मिन्नवष्टभ्य पुटं पुनः ।
तर्जनी कुरुते घातं तं पातं बिन्दुमूचिरे ॥६९॥

[यथा—] [4]देंदिगि देंदिगि गिरिगिद गिरिगिद ॥ [5]इति बिन्दुः ॥७॥

दक्षिणः[6] पीडयन् वाद्यं वादयेदितरः पुनः ।
अवष्टभ्य पुटं हन्यात् तदा यमलहस्तकः ॥७०॥

[यथा—] कुन्द २*[7]झृं हें झृं हें द्रा ॥
॥ इति यमलहस्तः ॥८॥

अङ्गुष्ठतर्जनीघातः[8] स्कन्धप्रस्फुरणं तथा ।
यत्र [9]प्रोत्तुङ्गता वाद्ये पाटं तं रेचितं विदुः ॥७१॥

[यथा—] [10]दें दें थां थां दें दे नन हझें ॥ इति रेचितः ॥९॥

भ्रमरो भ्रमिभङ्गीभिः सर्वाङ्गुलिसमाहतेः ॥७२॥

[यथा—] [11]खोणं खुखुणं खुट्टणं झेंद्रझेंद्र [12]णहणह कर झें
॥ इति भ्रमरः ॥१०॥

विद्युद्विलसितः[13] पाटो वलितार्धार्धहस्ततः ।
तर्जन्यङ्गुष्ठघातेन जायते राजशासनात् ॥७३॥

[यथा—] [14]तेण तेण तिट झें झिहि ३ त्र[15] ॥ इति विद्युद्विलासः ॥११॥

---

[1] S. R. खुखुणं २, झेंद्र २, टिरि २; G. omits ४

[2] G. पाटा

[3] S. R. रहरह तरकिट धिकिट तकिधकि टें हें टहेंत्रः; G. adds ननगिडगि at the end.

[4] A. G. दें दें गि दें गि०; S. R. ०गिरिगिड गिरिगिड

[5] A. omits इति बिन्दुः [6] A. दक्षिणं * A. omits २.

[7] G. ज्रों in the place of झृं, S. R. झेंद्र झेंद्र झेंहें २.

[8] A. omits विसर्ग G. ०षातः [9] A. प्रोतुंगता G. प्रात्तुंगता

[10] S. R. दें दें थां थों दें दें नखझें ३ नहनझें

[11] S. R. खेखेणं खुखुणं खु ३ णं झेंद्र २ णह करें झें ।

[12] G. ण ३ णह [13] A. ० तो

[14] S. R. तणे ३ तिर झों झों द्रि ३ त्रां [15] A. omits त्र



मात्रार्धकर्तरी प्रोक्ता यत्रानामिकया सह ।
प्रदेशिनी मध्यमा च घ्नन्ति वाद्यपुटं लघु ॥७४॥

[यथा—] [1]दा खुं खुं दा २ खुं खुं ॥ [2]ग्रें ह घेंट झें हें गि थों टें ॥ इत्यर्धकर्तरी ॥१२॥

तमलग्नं जगुर्यत्र कुण्डल्यां जायते करः ॥७५॥

अलग्नः सन्—

[यथा—] [3]खुं खुं द २ [4]नखें ज्रें गें हें गियोटें ॥ इत्यलग्नः ॥१३॥

तदा पाटो रेफसंज्ञः प्रजायते ।
स्कन्धसञ्चेन सर्वाभिः प्रहारोऽङ्गुलिभिर्यदा ॥७६॥

[यथा—] नहथों ज्रें ज्रें द्र झें[5] द्र झेंहेंद्र ॥ इति रेफः ॥१४॥

समपाणावविश्रान्तविरलाङ्गुलिघातनम् ॥७७॥

[यथा—] ननगिन[6] दें गि दें गि थों गि नहज्रों ३ [7]करज्झृं ॥ इति समपाणिः ॥१५।

पुटद्वयप्रहारेण परिवृत्तः प्रजायते ॥७८॥

[यथा—] ज्झृं थां[8] ४ गिणिना २ ॥ इति परिवृत्तः ॥१६॥

॥ इति षोडश प्रायिकहौडुक्कहस्तपाटाः ॥४॥

*तलप्रहारः प्रथमः प्रहारो वलितस्तथा ।
[9]गुरुगुञ्जितसंज्ञश्चार्धसंचश्च त्रिसञ्चकः ॥
विषमोऽभ्यस्त इत्यष्टावपाटा हस्तपाटकाः ॥७९॥

†तलप्रहारः पाटः स्याद् वामस्कन्धस्य चालनात् ।
वामेन पाणिना वामपुटमध्यनिपीडनात् ॥८०॥

---

[1] S. R. दो खुं खुं ३ ग्रेह घेट ३ झें हें घिगिगि थों टें

[2] A. ग्रह; G. omits घेंट

[3] S. R. खुंखुं २ नखें झेहेगि २ थांटें

[4] A. झंखेंज्रों

[5] G. हें २ द्र (omits द्रझें)

[6] A. नगि, S. R. omits the last ०न of ननगिन

[7] G. करज्रें

[8] A. omits ४, S. R. थों; A. adds घ before गिणिना

* cf. S. R. VI 847, 848

[9] S. R. ०गुम्फित०

† cf. S. R. VI 887-893 for 80-87 of the text.

[यथा—] दें थों ह्लें* धिकितकि तकिटिकि ।
ज्झ्ं धिथरिथिथिरित्र ॥ इति तलप्रहारः ॥१॥

प्रहारपाटनिष्पत्तिस्तलाङ्गुष्ठाभिघाततः ॥८१॥

यथा— [१]झ्ं द्रां थों दिगि दिगिदां । किटघोंधों
॥ इति प्रहारः ॥२॥

पटहादिषु वाद्येषु समुदग्रेषु कल्पते ।
अङ्गुष्ठतर्जनीघातो यत्र तं वलितं विदुः ॥८२॥

यथा—खुं खुं दरि दां थों गि [२]दां थोंगि थोंगि ॥ इति वलितः ॥३॥

दक्षिणानामिकाङ्गुष्ठवलनाभ्यसनक्रमात् ।
तथा वामकरोल्लासाज्जायते गुरुगुञ्जितः[3] ॥८३॥

यथा—थुकर ४ [४]थरगिडि थरगिडि दधिकिथोंटें ॥ इति गुरुगुञ्जितः[५] ॥४॥

नितम्बचलनाद्वामचरणस्य प्रकम्पनात् ।
तथा पाणितलोच्छ्वासादर्धसञ्चः प्रजायते ॥८४॥

यथा—खें दें दरि खें खें दरि खें खें ट खें खें[६] ट— ॥ इत्यर्धसञ्चः ॥५॥

त्रिसञ्चो जायते सव्यहस्ताङ्गुष्ठविघट्टनात् ।
त्रिकस्य [७]चलनात् स्कन्धसञ्चादपि मनोहरः ॥८५॥

यथा—खेंद खेंद [८]खेंद खेंद ॥ इति त्रिसञ्चः ॥६॥

हस्तवैषम्यविन्यासादपाटो विषमो भवेत् ॥८६॥

यथा—खेंद [९]धरि २ थोंगि [१०]धरि खे खे खे खरकट [११]खरकट ॥ इति विषमः ॥७॥

जायतेऽभ्यस्तसंज्ञोऽत्र पाटः पाणिविवर्तनात् ॥८७॥

यथा—गणगिण णंगि थण [१२]गिथण गिणणंगि तकिधिकित्त
॥ इत्यभ्यस्तः ॥८॥

॥ इत्यष्टावपाटाख्याः करपाटाः ॥५॥

---

* S. R. द्रें धिकिट किट झेंधितिरि २ त्रा
[१] S. R. झेदां थों गिदिगिद २ किटघों घों
[२] S. R. omits दां and the last गि
[3], [५] G. ०गुम्फितः
[४] A. धरगडि धरगिडि, G. रथगिडि थरगिडि; S. R. थोंरगिडिदा २ धिकिथोंटें
[६] A. omits second खें [७] G. वलात्
[८] A. adds one खें, S. R. खेंद खें खेंद खेंद [९], [१०] G. थरि
[११] G. omits second खरकट; S. R. थों दिगि धरिखें ४ (rest agrees with A.)
[१२] G. omits गिथण, S. R. खणगिणखंगि २ तकिधिकित्त



*सञ्चो वि[च्]छुरितश्चेति पाटावलगसंज्ञको[१] ।
†अर्धाङ्गुल्यग्रघातेन तत्र सञ्चः प्रजायते ॥८८॥

यथा—थुकर थुकर [२]गिणणगि ॥ इति सञ्चः ॥१॥

शुद्धेन करसञ्चेन घातेनाङ्गुष्ठहेतुना ।
क्रमादुत्पद्यते पाटोऽलगो वि [च्] छुरिताभिधः ॥८९॥

यथा—झेंद्र[3] [४]झेंगिरि गिडिद[५] नगिरि गिडिन[६]
॥ इति वि[च्]छुरितः ॥२॥

॥ इत्युत्पन्नालगपाट-[७]द्वयम् ॥६॥

$[८]भ्रमरः कुञ्चितश्चेति चित्रपाटद्वयं परम् ।
‡तत्र स्याद् भ्रमरो नाम घातो वलितभेदतः[९] ॥
तलेन क्रियते यत्र चित्रपाटो मनीषिभिः ॥९०॥

यथा—दथों झेंद्र खुंखुंदरि[१०] थोंगियोंगि[११] ॥ इति [१२]भ्रमरः ॥१॥

सङ्करो हस्तपाटानां कुञ्चितः कीर्तितो बुधैः ॥९१॥

यथा—खुंखुंधरि [13]खुंखुंघरि [१४]घरगिड घरगिड दह्लें दह्लें ॥ [१५]खर खर दह्लें ॥
गिरिगिडिद गिरिगिडिद दथोंगि[१६] दथोंगिद ॥ इति कुञ्चितः ॥२॥

इति [१७]चित्रपाटद्वयम् ॥७॥

इत्यष्टाशीतिहस्तपाटाः ॥ [१८]श्रीरस्तु ॥

---

* cf. S. R. VI 849 [१] G. ०संज्ञको
† cf. S. R. VI 893, 894 for 88, 89 above.
[२] S. R. गिणणं २ [३] G. and S. R. add २
[४] G. झेंगिगिडि २ (नगरि गिडिन agrees with A.)
[५] S. R. दा [६] S. R. गिडनम्
[७] G. ०पाटा $ cf. S.R. VI-849
[८] G. भ्रामरा
‡ cf. S. R. VI–895 for 90, 91 above.
[९] G. repeats here यथा झेंद्र·········इति वि [च्] छुरितः
[१०] G. ०घरि and repeats this phrase.
[११] S. R. दथंद्रें झेंद्र ४ खुंखुंधरि दथोंगि
[१२] G. भ्रामरः [13] G. omits second खुंखुंघरि
[१४] G. घरिगि थरगिडा दह्लें दह्लें, S. R. घरिगिगिड २ दह्लें २
[१५] G. omits खरखरदह्लें, S. R. reads दत्थोंगि instead.
[१६] A. दथांगि दथांगि [१७] G. विचित्रपाटा०
[१८] G. omits श्रीरस्तु

एतेषु पाटवर्णेषु स्वराः सप्त [1]प्रकीर्तिताः ।
अ आ इ ई उ ए ऊ (ऊ ए) च वाद्यविद्याविशारदैः ॥९२॥

अथ प्रातिस्वकान् वर्णानधिकान् [2]मुरजादिषु ।
दर्शयामो मतङ्गादिमतमाश्रित्य तत्त्वतः ॥९३॥

*मुरु(र)जे तद्धियों टें हें नन्दे सप्त प्रकीर्तिताः ।
केषांचन मते पाटास्तटह्ला[3] दधला इति ॥९४॥

परेषां झभमा वर्णा वर्ण्यन्तेऽधिकतामिताः[4] ।
तत्र [5]तद्ध्यादयः सप्त केवलाः शुद्धसंज्ञकाः ॥९५॥

तेकाद्यैर्व्यापकैर्मिश्राः कूटा इत्यभिसंज्ञिताः ।
शुद्धाः कूटविमिश्रास्तु[6] खण्डपाटाः प्रकीर्तिताः ॥९६॥

[7]आवाजे त्वधिकावुक्तौ मज्जकारौ मनीषिभिः ।
इह स्युः प्रथमे वर्णा दंकारेण विनाकृताः[8] ॥९७॥

करटायां पुनः पाटा अधिकाः[9] करटा इति ।
टिरिकिः [10]कटिरिश्चैव तत्र पाटद्वयं मतम् ॥९८॥

गोंकारो घट(ड)से प्रोक्तो टंकारो[11] ढवसे मतः ।
ढक्कायामपि ढेंकारः क्रेंकारः कुडुवागतः ॥९९॥

झेंकारवर्जिताः पूर्वे रुञ्जा [12]रुंकारवर्णिका ।
ढवर्णो डमरौ प्रोक्तः खरटा इति पाटजाः ॥१००॥

डक्का डंकारबहुला नि(न)गौ कखरटाश्रया ।
बुं बुं तुम्बमिमे पाटा [13]डक्कुलीवाद्यसंश्रयाः ॥१०१॥

सेल्लुकायां खिधीपाटौ त्रिवल्यां तटधा इति ।
तें दों दों देति वर्णाः स्युर्ह्लोंकारो दुन्दुभौ मतः ॥१०२॥

भेर्यां [14]टोठौ (?) धटौ पाटौ [15]निःसाने (णे) परिकीर्तितौ ।
पाटा झनकटाः प्रोक्ताः कांस्यताले मनीषिभिः ॥१०३।

---

[1] G. omits प्र    [2] A. मुरु०
* cf. S. R. VI 1033-1036 for 94-96 above.
[3] G. looks like क्त्वा    [4] A. ०मताः
[5] G. मध्या०    [6] G. ०मिश्राश्च    [7] A. आवजे
[8] A. ०कृतः    [9] A. omits विसर्ग
[10] G. करटि०, S. R. तिरिकि-तिरिकि०    [11] A. ढेंकारष्टवसे
[12] A. रंकार०    [13] A. डुक्कुली    [14] G. गेध, S. R. तंकार०
[15] S. R. does not mention any पाट in निःसाण



टणत्कारोत्कटा घण्टा जयघण्टाथ [1]कीर्त्यते ।
दंकारपाटबहुला कम्रा किरिटिकाक्षरा ॥१०४॥

शुक्तिः किरिटिका-पाटा पट्टे[2] घडरटाः कखौ ।
बुक्कारबहुलं शृङ्गं हुंभुंव्यादि गिदित्यथ ॥
पाटवर्णाः स्मृताः शङ्खे मुनित्रितयसम्मते ॥१०५॥
॥ इति सर्ववाद्याश्रयाः पाटाः ॥

*विन्यासभेदाः पाटानां वाद्यानि मुरजादिषु ।
बोल्लावणी च चल्लावण्युडुवश्च[3] कुचुम्बिणी ॥१०६॥

चातुः (रु) श्रवणिका लग्नः परिश्रवणिका ततः ।
समप्रहारः कुडुपं (व) चारणा करचारणा ॥१०७॥

दण्डहस्तो घनरवस्तानि द्वादशधा[ऽ]वदन् ।
आदौ मध्येऽवसाने च प्राचुर्यं यत्र दंकृतेः ॥१०८॥

आद्ये खण्डे द्वितीये च तादृगेव यदा भवेत् ।
यत्र बोल्लावणी सोक्ता वाद्यविद्याविशारदैः ॥१०९॥
दें दें दें थों थों थों[4] दें दें दें ॥

वाद्यान्तरेऽपि वाद्यं स्यादस्याः खण्डद्वयं विदा ।
तत्तद्वाद्यप्रधानार्णौ[5] पार्थक्येन प्रयोजितौ ॥११०॥

झेंकृतिं दंकृतिस्थाने हुडुक्कायां च मर्दले ।
[6]थोंकृतिर्दौं त्रिवल्यां तु [7]डक्कायां [8]थोंकृतिस्तथा ॥१११॥

[9]टेंकृतिः करटायां स्यात् प्रधाना[10]-क्षरयोजना[11] ।
एवमेव बुधैर्ज्ञेयाः पाटा वाद्यान्तरेष्वपि ॥११२॥
॥ इति बोल्लावणी ॥१॥

चल्लावणी तु सा यत्र मण्डली वाद्यते विदा ॥११३॥
॥ इति चल्लावणी ॥२॥

उडुवस्तु सकोणेन लुलितेन प्रवादनात् ।
तलहस्तेन वामेन पाणिना दक्षिणेन तु ॥११४॥
॥ इत्युडुवः ॥३॥

---

[1] G. कीर्त्तते    [2] G. पट्ट घटरटाः
* cf. S. R. VI 900-918 for 106-124 of the text.
[3] G. omits ०डु०    [4] G. omits the third थों
[5] G. ०र्णैः    [6] A. थोंकृति दो G. थोंकृति दों
[7] G. omits डक्कायां थों०    [8] A. तुकृति
[9] A. टेकृति G. टंकृति,    [10] [11] A. adds विसर्ग

स्वस्तिकेन तु हस्तेन खुकारबहुलाश्रितम् ।
उद्दलीपिहितं वक्त्रं वाद्यते सा कुचुम्बिणी ॥११५॥

॥ इति कुचुम्बिणी ॥४॥

बोल्लावण्येव विज्ञेया चातु (रु) श्रवणिका बुधैः ।
क्रमाद्वा युगपत् पाटैः पाणिभ्यां [1]भूरिभिः कृतैः ॥११६॥

सा [2]द्विधा क्रमतो ज्ञेया पाटोपाधिवशाद्यथा ।
शुद्धैः पाटैः कृता शुद्धा चित्रैश्चित्रा मता सताम् ॥११७॥

॥ इति चातु (रु) श्रवणिका ॥५॥

अस्पृष्ट्वा कुण्डलीं[3] कोणघातेनालग्नको भवेत् ॥११८॥

॥ इत्यलग्नः ॥६॥

परिश्रवणिका सोक्ता वाद्यते यत्र तु क्रमात् ।
कर्तरी समपाणिश्च वाद्यवादनकोविदैः ॥११९॥

॥ इति [4]परिश्रवणिका ॥७॥

समप्रहारो वाद्यं स्यात् कराभ्यां युगपद्धतैः ॥१२०॥

॥ इति समप्रहारः ॥८॥

कुडुपा (वा ?) दुद्रूवन्त्यत्र[5] पाटा ये वाद्यसंश्रयाः ।
तदाद्यं वाद्यमाचक्षुराद्याः कुडुप (व ?) चारणम् ॥१२१॥

॥ इति कुडुप (व ?) चारणा ॥९॥

केवलैर्हस्तपाटैर्या वाद्या सा [6]करचारणा ॥१२२॥

॥ इति करचारणा ॥१०॥

हस्ताभ्यां क्रमतो द्वाभ्यां मृदुना दक्षिणेन च ।
वाद्यते तादृशैः पाटैर्दण्डहस्तः स [7]उच्यते ॥१२३॥

॥ इति दण्डहस्तः ॥११॥

पाटैर्निरन्तरैर्द्वाभ्यां पाणिभ्यां पाणिनाथवा ।
कुर्यात् (द्) घनरवं वाद्यं निरन्तरघनस्वनम् ॥१२४॥

॥ इति घनरवः[8] ॥१२॥

॥ इति द्वादश मुरु (र) जादिजातिवाद्यानि ॥

[1] G. स्तरिभिः
[2] G. विधा
[3] A. omits अनुस्वार
[4] G. परिका
[5] G. ०द्रूवं यत्र
[6] G. करणा
[7] G. उच्येते
[8] G. ०रवम्



*वल्लिश्च वल्लिपाटश्च घत्ता भेदो[1] झडप्पणी ।
अनुश्रवणिका हस्तो जोडणी त्रिगुणा ततः ॥१२५॥

पञ्चहस्तं पञ्चपाणिर्वाद्यं स्यात् पञ्चकर्तरी[2] ।
ततश्चन्द्रकलामे(प्ये)तान्याहुराद्यास्त्रयोदश ॥
प्रायेणैतानि दृश्यन्ते हुडुक्कायां परेष्वपि ॥१२६॥

†त्रिविधोत्पद्यते वल्लिः सोल्लासा सर्ववाद्यगा ।
स्कन्धस्य [3]मणिबन्धस्य कुडुप (व) स्य च चालनात् ॥१२७॥

॥ इति वल्लिः ॥१॥

वल्लिपाटस्तदा वल्ल्यामर्धं वार्धद्वयं [4]यदा ।
स्वैः स्वैः पाटैः कृतं संयोजनं वाय वियोजनम् ॥१२८॥

॥ इति वल्लिपाटः ॥२॥

वाद्यतेऽर्धं निबद्धं चेज्झेंकाराद्यन्ततोऽर्धकम् ।
वादयेदनिबद्धं [5]तु स्वबुद्ध्या करयुग्मतः ॥
पुनराद्यं निबद्धं चेद्वाद्यं घत्ता तदा भवेत् ॥१२९॥

॥ इति घत्ता ॥३॥

लयत्रैधात् त्रिधा भेदः पाटैः स्यात् सर्ववाद्यजैः ।
कश्चिदन्याङ्गगजः पाटः कश्चित् स्यात्तवुपाङ्गगजः ॥
कश्चिद्योगेन निष्पन्नस्तैर्मिश्रैः पादपूरणैः ॥१३०॥

॥ इति भेदः ॥४॥

सा [6]स्याज्झडप्पणी यस्यामादौ मध्येऽवसानके ।
वाद्यन्ते सर्ववाद्यानि नानावाद्यैरनेकधा ॥१३१॥

॥ इति झडप्पणी ॥५॥

पुनः पुनर्यदा पाटः श्रूयते वा तदक्षरम् ।
अनुश्रवणिका नाम तदा वाद्यं निगद्यते ॥१३२॥

॥ इत्यनुश्रवणिका ॥६॥

चतुरस्रत्र्यस्रमिश्रखण्डतालैश्चतुर्विधः ।
हस्तोऽसौ यत्र खण्डानि देंकारादीनि षोडश ॥
यद्वाष्टौ वाथ चत्वारि द्वे वा खण्डे यथाविधि ॥१३३॥

॥ इति हस्तः ॥७॥

* cf. S. R.VI 902-904 for 125. 126 above.
[1] G. adds here the figure ७.
[2] A. ०रि
† cf. S. R. VI 919-944 for 127-153 of the text.
[3] G. omits मणिबन्धस्य
[4] G. तथा
[5] G. चेतु
[6] A. स्यात्

अनुलोमविलोमाभ्यां तदर्धार्धविभेदतः[1] ।
खण्डतालाश्च पाटाश्च योज्यन्ते जोडनी(णी) तु सा ॥१३४॥
॥ इति जोडणी ॥८॥

भवन्ति त्रीणि खण्डानि वाद्यते यत्र चैककम् ।
त्रिगुणं[2] त्रिगुणा सा तु भणिता त्रिविधा बुधैः ॥१३५॥

त्रैगुण्यादादिमध्यान्तखण्डानां सा पुनर्द्विधा ।
क्रमव्युत्क्रमयोगेन खण्डानां तद्यथोच्यते ॥१३६॥

खण्डत्रयं प्रयुज्यादौ[3] द्वयमाद्यं प्रयोजयेत् ।
पुनराद्यन्ततः प्रोक्तमेवं त्रैगुण्यमादिमे ॥१३७॥

इत्यादित्रिगुणा प्रोक्ताऽथो मध्यत्रिगुणोच्यते ।
द्विधा सा मध्यखण्डस्य त्रैगुण्या[द्]द्विप्रकारतः ॥१३८॥

खण्डत्रयं वादयित्वा तत आद्यं द्वयं तथा ।
ततो मध्यमिति प्रोक्तः प्रकारः[4] प्रथमो मया ॥१३९॥

अथ खण्डत्रयं पूर्वं पश्चात् स्यादन्तिमत्रयम्[5] ।
ततो मध्यममित्येष प्रकारः[6] स्यात् (द्) द्वितीयकः ॥१४०॥

[7]अथान्तत्रिगुणा तत्र खण्डत्रितयवादनात् ।
[8]वाद्यमन्त्यद्वयं पश्चादन्तिमं वाद्यते पुनः ॥१४१॥

एवमष्टविधा प्रोक्ता त्रिगुणा[9] पृथिवीभृता ।
चतुरस्रत्र्यस्रमिश्रखण्डतालेषु वा क्वचित् ॥१४२॥

ताले कृतैकखण्डस्य मानेनाथ दलद्वयम् ।
वाद्यं दलत्रयं यत्र तत्र सा त्रिगुणा मता ॥१४३॥

अथवा चतुरस्रादिमध्यादेकेन केनचित् ।
युक्तैर्वैषां क्रमात् खण्डैस्त्रिगुणा गणिता बुधैः ॥१४४॥

केचित् क्रमादेककले द्विकलेऽथ [10]चतुष्कले ।
ताले विरचितैः खण्डैस्त्रिगुणां तद्विदो विदुः ॥१४५॥

[1] A. omits वि॰
[2] A. ॰गुण्यं
[3] G. ज्याद्यौ
[4] A. omits विसर्ग
[5] A. ॰द्वयम्
[6] A. omits विसर्ग
[7] G. अथोन्त॰
[8] G. ॰मन्त॰
[9] G. omits णा
[10] G. चतुः॰



चतुरस्रे खण्डमेकं त्र्यस्रे खण्डद्वयं ततः ।
मिश्रे खण्डत्रयं वाद्यमेवं तु त्रिगुणां[1] परे ॥१४६॥

अत्र पादैश्चतुर्भिः स्यात् पदैनैकेन निर्मितम् ।
कलाभिश्च तथाष्टभिः खण्डमेकं तु लक्ष्मगम् ॥१४७॥
॥ इति त्रिगुणा ॥९॥

हस्तशब्दान्वितैर्हस्तपाटैः[2] स्यात् पञ्चहस्तकम् ॥१४८॥
॥ इति पञ्चहस्तम् ॥१०॥

पाणिहस्ताभिधैः पाटैः पञ्चपाणिः प्रकीर्तितम् ॥१४९॥
॥ इति पञ्चपाणिः ॥११॥

पञ्चकर्तरिकासंज्ञैः पाटैः स्यात् पञ्चकर्तरि(री) ॥१५०॥
॥ [3]इति पञ्चकर्तरि(री) ॥१२॥

प्रवर्धन्ते प्रहीयन्ते मात्राश्चन्द्रकला इव ।
तालश्चन्द्रकलासंज्ञो यदि चन्द्रकला तदा ॥१५१॥

केचिच्चन्द्रकलां प्रोचुर्द्वात्रिंशन्मातृकात्मिकाम्[4] ।
द्विमात्राः षोडशकला वृद्धिह्रासयुता यदि ॥१५२॥

तादृशीभिश्चतुःषष्टिकलाभिर्दक्षिणे पथि ।
प्राहुश्चन्द्रकला नाम वाद्यं वाद्यविशारदाः ॥१५३॥
॥ इति चन्द्रकला ॥१३॥

॥ इति त्रयोदशप्रायिकहौडुक्कवाद्यानि ॥
॥ इति पञ्चविंशतिरुभयवाद्यानि ॥

येन पाटाक्षराणीव योजिताः सुहृदोऽरयः ।
संयोगविप्रयोगाभ्यां पाटास्तेन निरूपिताः ॥१५४॥

इति श्रीराजाधिराज-[5]कालसेनमहीमहेन्द्रेण विरचिते संगीतराजे [6]षोडशसाहस्र्यां संगीतमीमांसायां वाद्यरत्नकोशे अवनद्धोल्लासे पाटपरीक्षणं द्वितीयं समाप्तम् ॥

———

[1] A. ॰णं
[2] A. omits विसर्ग
[3] G. omits इति…री
[4] G. ॰ मातृकाम्
[5] G. ॰श्रीकुम्भकर्णविरचिते
[6] G. omits षोडश……मीमांसायां

## वाद्यप्रबन्धा नाम तृतीयं परीक्षणम्

[१]यतो वाद्यप्रबन्धोऽयं चित्रं [२]चित्रप्रवर्तने ।
तं वैचित्र्यविधातारं धातारं [3]प्रणिदध्महे ॥१॥

*अथ वाद्यप्रबन्धानामुद्देशः प्रतिपाद्यते ।
यतिरोता च गजरो रिगोणी कवितं [४]पदम् ॥२॥

मेलापकश्चोपशमोद्ग्राहः प्रहरणान्यथ ।
अवत्सकश्छण्डणश्च तुडुका[५] मलपं ततः ॥३॥

मलपाङ्गं च मलपः[६] पाट[च्]छेदोऽथ रूपकम् ।
अन्तरोऽन्तरपाटश्व खञ्जः खण्डयतिस्ततः ॥४॥

खण्ड [च्][७]छेदोऽप्यवयतिः खण्डपाद(ट)श्च खण्डकः ।
खण्डहुल्लः समः पाटो ध्रुवकोंऽगाङ्गरूपके ॥५॥

तालो वितालः[८] खलकः समुदायश्च जोडणी ।
उडवस्तलपाटश्चोट्टवणी [९]तुण्डकस्ततः ॥६॥

अङ्गपाटश्च पैसारस्त्रिचत्वारिंशदित्यमी ।
वाद्यप्रबन्धा उद्दिष्टा अथैषां लक्ष्म चक्ष्महे ॥७॥

प्रायः सर्वप्रबन्धोऽयं कार्यष्टेंकृतिमुक्तिकः ।
रचना कूटवर्णाभ्यां काभ्यांचिद्यत्र कोमला[१०] ॥८॥

एकरूपाक्षरस्तालः छन्दः कर्णरसायनम् ।
इति वाद्यप्रबन्धानां प्रायिकं लक्ष्म कीर्तितम् ॥९॥

विरामा बहवो यत्र वादनं च मुहुर्मुहुः ।
स खण्डो यतिरित्युक्तो गेया मण्ठादिसालग ॥१०॥

---

[१] A. ततो [२] A. चित्रः प्रवर्तते
[3] G. प्रणिधाहे
* cf. S. R. VI 945–1019 for this Parikṣaṇa.
[४] G. writes here द without शिरोरेखा; seems to intend its deletion.
[५] A. ०वा [६] G. omits विसर्ग
[७] A. ०छंदो० [८] G. omits विसर्ग
[९] A. तुंबक० [१०] G. adds अनुस्वार



एषैव [१]जनिका प्रोक्ता वाद्यतत्त्वविवेचकैः ।
वाद्या वाद्यप्रबन्धज्ञैः स्वतन्त्राङ्गतया[ऽ]थवा ॥११॥

अङ्गत्वेन यदैषादौ कस्यचिद् वाद्यते विदा ।
क्वचिद् वाद्यप्रबन्धस्य वदन्त्युट्टवणीं तदा ॥१२॥

गद्दगथो(थों) गक्कथो(थों)टें गद्दगथो(थों) गक्कथो(थों)टें ।
केचिदत्र न वाञ्छन्ति पाटानां रचनां[२] बुधाः ॥१३॥

॥ इति यतिः ॥१॥

गातव्यं स्या[द्]द्विरुद्ग्राहो देंकारैर्बहुभिर्युतः[3] ।
खण्डं द्वितीयवारं च तत्किंचिदधिकं मतम् ॥१४॥

ततः खण्डं तृतीयं तु कियद्दीर्घमतो मतम् ।
पाटैः शुद्धैश्च कूटैश्च खण्डैर्मिश्रैर्विनिर्मितम् ॥१५॥

व्यस्तैः समस्तैर्व्यामिश्रैर्नानापाटचयैस्तथा ।
मृदङ्गप्रकरणोक्तैः शुद्धकूटादिलक्षणैः ॥१६॥

पुनरेतत्खण्डमेव सदेंकारं सकृद्भवेत् ।
दीर्घं गायेत्ततः पश्चात् खण्डं[४] [५]वर्णसरात्मकम् ॥१७॥

शुद्धपाटादियुक् स्वल्पं ततः[६] प्राक् खण्डमीरितम् ।
अन्ते स्याच्छण्डणः[७] कार्यः स देंकृतिविमुक्तिकः[८] ॥१८॥

ऊं(ओ)तोवता सैककलिके युग्मताले प्रकीर्तिता[९] ।
निःसारौ छण्डणः[१०] कार्यो मानमत्र विलम्बितम् ॥१९॥

वृत्तं तु विकटं प्रायो ध्वनिरुद्धत उच्चकैः ।
केचित् केदारमित्यतामन्ये त्वाहवनीं[११] जगुः ॥२०॥

आहवन्यां केचिदाहुः पाटैर्देंकारबन्धुरैः ।
आस्थापना समं नीता तालैर्बहुविधैरिति ॥२१॥

केचिद्देंकारादिमाहुस्तामादौ [१२]देंकृतिर्भवेत् ॥२२॥

यथा—तद्धिटें । कथो (त्थों) कट [न] गनथो (थों) गकु थो (थों) गद २ धिक्कट[१३]। तकट । [१४]धिकट । थोगक । धिधिकथो[१५]२ घटें २ ॥ इत्युद्ग्राहो द्विवारं कर्तव्यः ।

---

[१] A. जनका, S. R. जक्का [२] A. omits अनुस्वार [3] G. ०र्युतैः
[४] G. omits अनुस्वार [५] A. चूर्ण० [६] G. तत्
[७] A. छंडनः [८] A. ०काः G. का [९] A. adds विसर्ग
[१०] A. ०नः [११] S. R. वहनीं [१२] A. दं०, G. दे०
[१३] S. R. ०ट्ट [१४] S. R. omits धिकट
[१५] S. R. थोर० (२ seems to have been deciphered as र)

गड्दक् । [१]दें‌प्रिनदेगक् । [२]तुंयंहंटेंगक्[3] । देंगनथगनत । दिगिनर[४] तत्तकट । देंदेंगिन[५] तक्कट [६]खु थं थं देंगक्[७] ॥

॥ इति देंकारखण्डं द्विः [॥] द्वितीयवारे त्वधिकं कथ्यते ॥ यथा—

[८]गड्दक् दें दें के गड्दक् । इति [९]तद्दें गड्दक्[१०] । [११]तथों [१२]कटथो(थों)गक् तट्टे कट् दगक् [१3]दारहे कथोरहेंट्टें तक्के [१४]टिक्के थो(थों) [१५]ग्रहप्रड्द यो दक् तथोगक् थोगक् । छें दोंथक्कौ थौः टैः ॥ इति तृतीयखण्डम् ॥

शुद्धादिपाटरचितं ततः[१६] [१७]प्राचीनदेंकारखण्डं सकृत् ततः ।

गड्दग् दग्नि[१८] नधिक[१९] धिकतक् देंगि कथन [२०]हकगड्दक्दरगड धिरिगिड्द[२१] धरगड्दक[२२] दरगडदग[२3] धिरगडदग २ तकधिक[२४] [२५]थोगटें डीखुखुतत् कडि खुतक् [२६]धिक् थोगटें ॥ इति वर्णसरात्मकं खण्डम् ॥ ततः प्राचीनं शुद्धादिनिर्मितं स्वल्पमेतावत् पर्यन्तं चच्चत्पुटे ॥

गड्द[ग्] *२ टें [२७]दग्न थोहटें हें[२८] तटहेंतो[२९] ततधिधियों[30] थोः[31] [3२]रघट्टैः[33] [3४]टैंथों तथों । तकथो धिक् थोटें । इति निःसारौ छण्डणः ॥ टेंकारस्थाने देमित्यन्ये[3५]

॥ इत्योता ॥२॥

सकृदुद्ग्राहखण्डं स्यान्नातिदीर्घं न चाल्पकम् ।
वादकोद्घोषगम्भीरं ध्वनिमुच्चतरं दधत् ॥२३॥

---

[१] A. देग्नि (ग्नि ?), S. R. देगि [२] A. नु
[3] S. R. देंगक्
[४] G. ०नत S. R. दिगिनत्तेक्कट [५] A. ०गेन
[६] S. R. खु खु घं घं [७] A. देगत्र
[८] S. R. गड्पक् देंगक् गडड्दक् देंगक् [९] A. दे दे S. R. तदे
[१०] S. R. adds टें [११] A. नेथों G. तथो
[१२] S. R. कदथों, G. कट्घो
[१3] S. R. दरे होंकथोरेहेटै
[१४] S. R. धिक थों टैं थों टैं थों टैं (इति तृतीयखण्डम्)
[१५] G. हग्रड्द थोगक् दंथो कगक् दंथो थक्को थोः टेः ॥
[१६] G. adds पुनः [१७] G. प्राचान
[१८] S. R. ०दक् [१९] S. R. ०का [२०] S. R. दकगदडक्
[२१] S. R. ०गिड [२२] A. ०का [२3] G. ०गु S. R. ०गरदग
[२४] A. ०धीक, S. R. धिग [२५] S. R. थोंगटे
[२६] G. थोरगडरथक् थोतक् । थारगडरतकधिकथोंगटें ।
* G. र [२७] S. R. द्रग् [२८] G. omits हें, S. R. हेते
[२९] G. ०हों थो र, S. R. दहं थो २ [30] G. थोः
[31] S. R. थों [3२] G. रथों द्रै टैः थोः तथोः
[33] S. R. ०टे [3४] S. R. टैं [3५] A. ०मित्येके



त्रिरभ्यस्तमिदं[१] कूटैबंद्धं[२] वर्णसरेण वा ।
वारंवारमुपशमं कृत्वा[ऽ]थो यत्र रच्यते ॥२४॥

छण्डणो[3] गजरः [४]स स्यादस्यादौ स्यात् पुनः पुनः ।
एकताल्यामुटवणं निःसारुर्वैकतालिका ॥२५॥

भवेदुपशमे[मोऽ]न्येषु नास्मिंस्तालो नियम्यते ।
गजरावयवाः सर्वे वादनीया निरन्तराः ॥२६॥

यथा—[५]तथोह तथोहा (ह) [६]धिथोह । हिथोहटें[७] थो हटग थोंहटें । दद[८] ॥ इत्युट्टवणमेकताल्यां पुनः पुनः । [९]थों टों दंदंगेन । थो(थों)गटें गें धिकतक । इत्युद्ग्राहः । प्रतिग्रहणा[१०] (?) चोच्यते । अयं किलैकताल्यां कृतः ।

[११]गड्दक् तटेंगणनक् [१२]दिहक् दिहक् दियोगक् । किड्दक् थोवक् । थों तरेथो । हटगेथों । इति त्रिरेकताल्यां खण्डः[१3] केवलोऽप्ययं खण्डो गजर इत्युच्यते ॥ [१४]थोंगक् यो(थों)गक् कथोहरघटघटें[१५] । इत्येकताल्यां पुनः पुनरुपशमः । थोंहटें । इति [च्]छंडणः । एतत् सर्वं नैरन्तर्येण वाद्यते ॥

॥ इति गजरः ॥३॥

शुद्धैः कूटैर्विमिश्रैश्च पाटैर्व्यस्तैः समस्तकैः ।
बद्धं वर्णसरेणैतत् खण्डत्रितयमादितः ॥२७॥

द्विरुक्तोपशमेनैतत् त्रयं युक्तं पृथक् पृथक् ।
कोलाहलो वादकस्य स्थूलोच्चध्वनिपेशलः ॥२८॥

---

[१] G. folio no 33-A ends with त्रिरभ्यस्त मि० and the other side (33) begins with श्र (श्रै) र्नानापाटचयैस्तथा of verse 16 of the text; this repeated portion extends upto गंभीरं ध्वनिमुच्चतरं दधत् on folio 34-A followed by त्रिरभ्यस्तमिदं etc.
[२] G. ०बंद्ध० [3] A. छडणे G. छंडनो [४] G. omits स
[५] G. तत्थोह धित्थोह धिथोह थोहट धथोहटें ६६ (with two ' signs on ६६), then repeats ०जरावयवाः सर्वे वादनीया निर० from verse no. 26 of the text; the repeated portion is cancelled by round brackets at both the ends.
[६] S. R. धिथों २ [७] S. R. ०हटे थोंहदग थोहटें ।
[८] G. and S. R. omit दद
[९] G. थो टौं०, S. R. थोंटें दंद० [१०] S. R. ० ग्राहणः
[११] S. R. गड्दगत देंगगनग्दिहिक् कथोंगनकधिक थों गटेंहें थोदगक् । गिड्दक् थोंगक्कथों ३, दें थों हटगथों ३, दें ।
[१२] G. दिहिक् दथोगक् किड्दक् थोगक्०
[१3] G. खंडम् [१४] S. R. adds गड्दक्
[१५] G ०हटघटे, S. R. ०थरे ।

[1]छण्डणान्ता रिगोणी सा स्यादस्यां तु निजेच्छया ।
आदावुट्टवणं दीप्ते नृत्ते स छण्डणो[2] भवेत् ॥२९॥

सहोपशम(मे)नान्यत्र ललितोट(ट्ट)वणा[3] पुनः ।
ललिते नर्तने प्रोक्ता तथैषा दीप्तनर्तने ॥३०॥

[4]अन्त्यखण्डात् [5]सोपशमाच्छण्डणा परिकीर्तिता । यथा–[6]तक्कें धिक्कें तकधिकतक् ।[7] [8]किधोकदगेन[9] २ थोगकथो[10] ३ ॥ इति प्रथमखण्डः ॥ टों थोटः गंथोः धियोहटे ॥ इत्युपशमो द्विः ॥ [11]तर्कंग्रहे[12] द्रेड गुत्य धिक्कग्रंदेडग्धिक्[13] । [14]दर्कंग्रहडग्दक् थोगतकधिक[15] कधिक तद्धिते कधिटे [16]गेनथोग २ थोगक्कैंथो ३ ॥ इति द्वितीयखण्डः ॥ टें थों हट [17]गेंथोंटें ॥ इत्युपशमो द्विः ॥

[18]थोंगडं दरगड[19] धित्थरिगड धित्थरिगद्दगतः । थोकटतकथो कटधिककाधिक[20] तद्धित्तक् ॥
॥ इति तृतीयखण्डः ॥

[21]कत्योह कथोहट गेंथोहटें ॥ इत्युपशमो द्विः ॥
[22]तत्योगड्द २* दिगनदिगन कथोगतद्धित्तक् थोंहटें ॥

इति[च्]छण्डणः ॥

॥ इत्येकताल्यामुदाहरणम् ॥

॥ इति रिगोणी ॥४॥

---

[1] A. G. छंडणों[ऽ]ते [2] A. छंडणा [3] A. ०णी G. ०णीं
[4] G. अंत्ये [5] A. सोपधात् स मंडणा, G. सोपशमछण्डणा
[6] A. तेंक्क, G. तेक्कें [7] S. R. ०तककि
[8] G. after किधोक omits subsequent portion upto इत्युपशमो द्विः
[9] S. R. थोंकटगेन २ [10] S. R. थोंगक्कथों
[11] G. दर्क्क०, S. R. तक्कर्ग दडरद कुथिकुर्गदडधिक्क
[12] A. omits ०हे [13] A. गुथधिक् गंदेडकधिक्
[14] S. R. तक्कर्ग दडरद कुथिकुर्गदडधिक्क दक्कर्ग दडग्दथोंगत्तकधिक कधिकत धिककधि टेंगेंनथोंग २ थोंगक्कथों ॥
[15] A. थोगत्रकधिकधिक [16] G. गन०
[17] A. G. गेथोटें
[18] G. थोगड०, S. R. थोंगटं दरगड धिरगड धित्थाः थोंकट तकथों कटधिक्कक । थोंधिक तद्धितक् ॥ इति तृतीयखण्डम् ।
[19] G. adds धिरगड [20] A. ०क्धिक्
[21] A. कथोह, S. R. कथोंटक्क थोंहकटगे धिकटैथौ हटगें थों हटें
[22] A. तत्थोः, S. R. तथों गिड्दक् दिगनदिगन दिगनक थोंगतद्धित्तक् थोंहटें ॥
* A. omits २



शुद्धैः कूटैर्विमिश्रैश्च [1]द्विरावं खण्डमल्पकम् ।
बद्धं वर्णसरेणाथ खण्डं तादृक् सकृद्भवेत् ॥३१॥

गीत्वैवं ध्रुवकोद्ग्राहावुद्ग्राहस्यान्तिमे दले ।
न्यासो यत्राथवोद्ग्राहे कवितं तदुदीरितम् ॥३२॥

द्रुतं मानं भवेदत्र पाटवर्णाः स्युरुद्धताः ।
दीप्ते च नर्तने प्रायो [2]विनियोगोऽस्य कीर्तितः ॥३३॥

यथा—गड्दक्[3] दग्निन [4]दंदं गिन थोग धिक्कट तक्[5] । दहकरदरगड थंगिक थोदगेंक[6] [7]थिकथोटें २ ॥ इत्युद्ग्राहो द्विः ॥

[8] झेंगकेनखिखिन ३ तः । झेंरिकनखिखिन[9] ३ थोः ॥ इति ध्रुवाख्यं खण्डम् ।

ततो दंहकदरगडेत्यादिनोद्ग्राहान्त्यखण्डेनोद्ग्राहेन वा सकलेन गड्दगित्यादिना त्यागः ॥ निःसारुकताले चेदमुदाहरणम्* ॥ ॥ इति कवितम् ॥५॥

उद्ग्राहः स्वल्पको यत्र ध्रुवः शुद्धादिनिर्मितः ।
स्याद् वर्णसरवद्धो वा नातिदीर्घस्तथान्ततः ॥३४॥

छण्डणश्चेत् पदं तत् स्यान्नियोज्यं दीप्तनर्तने ॥३५॥

यथा :—तेट्टहें [10]ततवकतट्टें ॥ इत्युद्ग्राहः ॥ तकटधिकट [11]धिधिकट धिक्किर्गड्दगधिकतक [12]धिगथोग टतकट [13]धिधिकट धिक्किर्गड्दग धिगथोगों कट्टें[14] ॥ इति ध्रुवः ॥ थरिट्टेंक्कथोंटें[15] [16]हेंधिक्कथोगटें ॥ इतिच्छण्डणः ॥ इतीदमुदाहरणं वर्णताले ॥†

वादयित्वा प्रबन्धस्य यतिं[17] मध्ये[18] विमुच्यते ।
पाटेन यत्र तत्प्रोक्तमपरैः सूरिभिः पदम् ॥३६॥

॥ इति पदम् ॥६॥

वाद्यखण्डोऽल्पकः कूटैः कैश्चिदत्र विनिर्मितः ।
स्वभ्यस्तो नर्तनारम्भ एकताल्याद्युतालके ॥३७॥

---

[1] A. G. द्विरोधम् [2] G. omits विनियो० [3] A. ०ग्
[4] G. दं दग्नि गिन [5] A. ०क्क [6] G. ०के
[7] G. धिक० [8] G. गें० [9] G. adds विसर्ग
* cf. S. R. Vol. III, p. 438.
[10] G. omits the first त०
[11] G. omits this phrase. [12] G. धिकथों
[13] G. omits this phrase. [14] G. omits अनुस्वार
[15] G. ० थोटें [16] A. ०ह
† cf. S. R. Vol. III, p. 439 [17] G. omits अनुस्वार
[18] G. माध्य (gives in पूर्वमात्रा)

काहलाकरटाटीपिवादने समकालतः ।
[1]तह्लीमितिच्छण्डणान्तः प्रोक्तो मेलापको बुधैः ॥३८॥

मेलापनीमिमामाहुर्विद्यावत्समये बुधाः ।
टीपिरावृत्तिवर्णानां टिरिकीत्यभिसंज्ञिनाम् ॥३९॥

यथा—थोंगटें गडदनं थोगटें । [2]तह्लीं ॥ इतिच्छण्डनः (णः) ॥ इति मेलापकः* ॥७॥

इति यावत् प्रबन्धं पुनः पुनर्वादनीयम् ।
पाटैः शुद्धादिभिर्बद्धं खण्डं वर्णसरेण वा ॥४०॥

स्वभ्यस्तं मृदुनादं च सुकुमाराक्षरान्वितम् ।
प्रयोज्यं कोमले नृत्ये भवेदुपशमाह्वयम् ॥४१॥

यथाः—टें थों हटगें थों । टें टें थो हटगेथोटें । ॥ इत्युपशमः† ॥८॥

यस्तु वाद्यप्रबन्धादौ शुद्धकूटादिनिर्मितः ।
खण्डो भवेत् स उद्ग्राह [3]इत्युद्ग्राहविदां मतम् ॥४२॥

उद्ग्राहोपशमादीनां यद्यप्यस्याङ्गतोदिता[4] ।
तथाप्यत्र प्रबन्धानामावृत्तत्वात् स्वतन्त्रता ॥४३ ॥

यथा—तट्टेंहें तट्टें तत्तक्कतट्टें ।
इति यावत् प्रबन्धपूरणमभ्यसेत्[5] ॥ उद्ग्राहप्रबन्धः ॥
अङ्गत्वे तु[6] द्विरावृत्तिरनावृत्तिरथो भवेत् ।
प्राक् प्रबन्धत्वमङ्गत्वमस्य तुल्यमिहेष्यते ॥४४॥ ॥ इत्युद्ग्राहः* ॥ ९ ॥

कूटपाटादिरचितमुद्धतध्वनिसंभृतम् ।
मुहुर्मुहुः प्रयोज्यं स्याद् ध्रुवागोचरनर्तने ॥४५॥

ज्ञेयं प्रहरणं नाम प्रबन्धो वाद्यपूर्वकः ।
[7]प्रायो नृत्ये प्रयोक्तव्यमन्यथापीच्छया भवेत् ॥४६॥

यथाः—कथोगक थोगटे थोगक् कथो कथो [8]गक् थो गट [9]थोगक् गड्द २ तक्क धिक्क थोगक् टेंगेंदें [10]थोंहः दिग्दिक धित्थो हाधिक्क [11]धिटें ॥ इति पुनः पुनः प्रयोज्यमेकतल्यामुदाहरणम् ॥ ॥ इति प्रहरणम् ॥१०॥*

[1], [2] S. R. तह्री०   * cf. S. R. Vol. III. p. 440
† cf. S. R. Vol III. p. 441   [3] G. omits इत्युद्ग्राह०
[4] G. ०तं   [5] G. ०सेत्त   [6] A. omits तु
* cf. S. R. Vol. III, p. 442
[7] G. omits प्रायो नृत्यं प्रयोक्तव्य०   [8] G. गट थों गक्
[9] G. omits this phrase.   [10] G. थों०
[11] G. टिटे   * cf. S. R. Vol. III, p. 443



उद्ग्राहः प्रथमं खण्डं ततः शुद्धादिनिर्मितम् ।
तद्वर्णसरबद्धं वा द्विः प्रयोज्यमिदं द्वयम् ॥४७॥

पूर्वोक्तखण्डसहितं गेयं कूटयुतं दलम् ।
अन्ते तु [ च् ]-[1]छण्डणो गेयो[ऽ]वत्सके[2] मुनिसंमतात् ॥
उद्धते नर्तने प्रायो [3]विनियोगोऽस्य कीर्तितः ॥४८॥

यथाः—गड्दक् दं दं गड्दक् धिक्कट तकधिक तक् ॥ इत्युद्ग्राहः ॥ खडि खडि[4] कखनक[5] खिरुक्[6] [7]तक्क कधिक्क कगिण नगथोग २ ॥ दिहिक्किथोग [8]दिहिक्किथोग दिहिक्कि तकधिक थोगटैः[9] ॥

॥ इति द्वितीयखण्डः[10] ॥

एतच्च सहोद्ग्राहेण पुनर्वादयेत् । [11]झखि झखि खिन्ननख खित झे[12] खखनख । खझें[13] खनखखि [14]झडिहिडि हिक थोगक् ॥

॥ इति तृतीयं खण्डम् ॥

पूर्वखण्डेन सह वादयेत् । तकधिकत्तक्करे घटे । [15]घथोगथोगक्कटें ॥ इतिच्छण्डणः ॥ इदमुदाहरणं राजविद्याधरताले ।

॥ इत्यवत्सकः[16] * ॥११॥

वाद्यावसानकृत् खण्डश्छण्डणः पाटनिर्मितः ॥४९॥

यथा—गड्दक् दें दन थोहटें हतटहेथोः । ततः धिधिथोः [17]रघट्टटेंथोः । [18]कतथो धिकथोटें ॥

॥ इतिच्छण्डणः† ॥१२॥

अभ्यस्तोऽतिद्रुते माने शुद्धकूटादिनिर्मितः ।
खण्डो वर्णसरात्मा वा तुडुकेति निगद्यते ॥५०॥

उद्ग्राहादित्रयं गीत्वा पुनरुद्ग्राहवादनम् ।
तुडुकेति परे प्राहुरपरे त्वन्यथा जगुः ॥५१॥

[1] G. छडणो   [2] G. वच्छके   [3] G. repeats विनियो०
[4] G. ०डि   [5] G. खखनग   [6] G. खिदक्
[7] G. खखनख खिरुक् तक्क and agrees with A. from कगिण
[8] G. does not repeat this phrase.
[9] G. ०टें and adds गड्दग् तकधिक थो गें टें ।
[10] G. द्वितीयं खण्डम्   [11] G. जाखिज्जखि   [12], [13] G. ०ज्जें
[14] G. जडि०   [15] G. थथोगक्कटें   [16] G. ०त्संकः
* cf. S. R. Vol. III, p. 444
[17] G. रथ०   [18] G. omits this phrase.
† cf. S. R. Vol. III, p. 445

उद्ग्राहध्रुवकाभोगेष्वत्रान्यतमखण्डकम् ।
तुडुकायां वादनीयं [1]विनियोगो दीप्तनर्तने ॥५२॥

यथा—टें ददगि । तथोगदे[2] धिकतः [3]रघटे हेकथो[4] टगे[5] धिकटत[6] ॥ थोग गणनंगि थोगतक धिकथोगटें ॥ एकताल्यामिदमुदाहरणम् ।

॥ इति तुडुका* ॥१३॥

खण्डो वर्णसरात्मा वा शुद्धाद्यैरथ निर्मितः ।
विस्तीर्णोऽतिद्रुतलयो विलम्बितलयो[ऽ]न्ततः ॥५३॥

क्वचित् कोमलवर्णः स्याद्दीप्तवर्णः क्वचित् क्वचित् ।
गुम्फचारुत्वसंयुक्तो[7] मलपो दीप्तनर्तने ॥५४॥

यथा—गड्द २ [8]तद्धिथो हयोहरे[9] [10]घटे गण कधिकथो देहें ॥ थोहगक् तक्तः धिक् [11]धियोहक थो हटें डिखें[12] खदखखिझें[13] [14]रघटे हेयो[15] हगक् दिंदिं कटदंहं [16]गड्दक् [17]घरिकट २ थरिकटतक् ततकि धिधिकथो[18] ॥

॥ इदमुदाहरणं मण्ठताले† ॥

केचित् सकृद् द्विवारं वोद्ग्राहखण्डस्य वादनम् ।
सकृदेव ध्रुवं तद्धियोंटेंदेंभिरक्षरैः ॥५५॥

व्यापकाक्षरसंमिश्रैर्निरन्तरयतिक्रमैः ।
यत्र बन्धस्य चारुत्वं मलपं तन्निगद्यते ॥५६॥

॥ इति मलपम्[19] ॥१४॥

सोदाहरणलक्ष्माणः प्रबन्धाः कतिचिन्मया ।
लक्षिता लक्ष्ममात्रं तु शेषाणामभिधीयते ॥
मलपेनाङ्गभूतेन मुख्येन मलपाङ्गकम् ॥५७॥

॥ इति मलपाङ्गम् ॥१५॥

पाटैर्मलपपाटः स्याद् विषमैर्मलपोपमः ॥५८॥

॥ इति मलपपाटः ॥१६॥

---

[1] G. omits वि० [2] G. ०टि [3] G. रथ०
[4] G. ०घो [5] G. ०ग्गें [6] G. adds विसर्ग
* cf. S. R. Vol. III, p. 446 [7] G. ० संयोगो
[8] A. द० [9] G. ०र [10] G. थटे
[11] G. omits धि० [12] G. डिखे [13] G. ० झं
[14] G. रथटें [15] G. omits हेयों [16] G. क०
[17] G. थरि० [18] G. adds विसर्ग
† cf. S. R. Vol. III, p. 447 [19] G. मलपः



[1]वाद्यं करतलाघातैर्द्रुतैश्च विकृतैरपि ।
कारं कारं च विच्छेदं वाद्यते छेदनामनि ॥५९॥

॥ इतिच्छेदः ॥१७॥

कृत्वोतां व्यापकैर्वर्णैः सपाटैर्यत्र रच्यते ।
उद्ग्राहो द्विः सकृद्वाथ प्रान्ते देंकृतिसंयुतः ॥
छण्डणो मध्यलयवान् (०वांस्) तद्रूपकमिहोदितम् ॥६०॥

॥ इति रूपकम् ॥१८॥

गीतवाद्यान्तरे वाद्यो निबन्धोऽन्तर इष्यते ॥६१॥

॥ इत्यन्तरः ॥१९॥

वादयित्वान्तरं पश्चादनिबद्धस्य वादनम् ।
यत्र सोऽन्तरपाटः स्यादिति वाद्यविदो विदुः ॥६२॥

॥ इत्यन्तरपाटः ॥२०॥

समैः श्लिष्टैर्घनैः श्लक्ष्णैः पाटवर्णैः परिस्फुटैः ।
हस्तलाघवसंपन्नै[2] रचितः खोज इष्यते ॥६३॥

॥ इति खोजः ॥२१॥

खण्डं पाटयुतं कृत्वा यतिवद् यदि वाद्यते ।
आवर्तनेन च तदा बुधैः खण्डयतिः स्मृता ॥६४॥ ॥ इति खण्डयतिः ॥२२॥

[3]यत्र [4]व्यक्तियुजश्छेदः खण्डच्छेदस्तु स स्मृतः ।
[5]अथ प्रबन्धयोः खण्डच्छेदयोगात् समन्ततः[6] ॥६५॥

॥ [7]इति खण्डच्छेदः ॥२३॥

सा स्यादवयतिर्यत्र [8]सतालव्यापकाक्षरैः ।
[9]सपाटैर्बद्धखण्डायामन्तेऽन्ते[ऽ][10]वयतिर्भवेत् ॥६६॥ ॥ [11]इत्यवयतिः ॥२४॥

---

[1] G. gives कृत्वोतां···संयुतः of the next verse (61) here before वाद्यं etc. and cancels this portion with a mark resembling the figure ६ (incompletely written) at both ends; this portion is also found in its proper place.
[2] A. G. add विसर्ग
[3] G. adds अत्र खण्डच्छेदो यथा before यत्र; A. reads अत्र for यत्र
[4] A. ०युजछेदाः
[5] G. gives a confused version of this line as अथ प्रबन्धयोः खण्डच्छेदस्तु स स्मृतः and again gives the correct version.
[6] A. समं मतः [7] G. omits इति······छेदः
[8] A. तालव्यापकताक्षरैः [9] A. ०र्बंध०
[10] G. ० मंतें विरतिर्भवेत्, A. ०वियति० [11] A. इत्यवियतिः

खण्डपाटो भवेद् वाद्ये[ऽ]न्वर्थः पाटस्य खण्डनात् ॥६७॥
॥ इति खण्डपाटः ॥२५॥

मध्ये खण्डं खण्डकः स्याद् वाद्ये[1] खण्डकृते सति ॥६८॥
॥ इति खण्डकः ॥२६॥

खण्डहुल्लो भवेद्यत्र यतिः श्रो(स्रो)तोगता भवेत् ॥६९॥
॥ इति खण्डहुल्लः ॥२७॥

समः स्याद् गीतनृत्तस्थमाने समतया मतः ॥७०॥
॥ इति समः ॥२८॥

पाटः केवलपाटैस्तु शरीरं यस्य बध्यते ॥७१॥
॥ इति पाटः ॥२९॥

मुहुरन्तस्यया वृत्त्या ध्रुवको[ऽ][2]नेकवाद्यगः[3] ॥७२॥
॥ इति ध्रुवकः ॥३०॥

अपाटैर्व्यापकैर्वर्णैः संयतैरङ्गमिष्यते ॥७३॥
॥ इत्यङ्गम् ॥३१॥

गीतमुद्ग्राह्य द्विःकृत्वो ध्रुवाभोगध्रुवास्ततः ।
क्रमशो यत्र वाद्यन्ते तत् स्यादत्राङ्गरूपकम् ॥७४॥
॥ इत्यङ्गरूपकम् ॥३२॥

तालस्तालो भवेदत्र यो मार्गे दक्षिणाह्वये ।
चतुःषष्टिकलो युग्मो वाद्यते वाद्यकोविदैः ॥७५॥
॥ इति तालः ॥३३॥

यो वाद्यस्यादिमध्यान्तविकृतः स वितालकः ॥७६॥
॥ [4]इति वितालः ॥३४॥

खलको विततार्ङ्गुष्ठविरलाङ्गुलिना क्रमात् ।
पताकेन तु हस्तेन पाटैर्घातसमुद्भवैः ॥७७॥
॥ इति खलकः ॥३५॥

वादने सर्ववाद्यानां पाटैर्निजनिजैर्भवेत् ।
समुदायाभिधो वाद्यप्रबन्धोऽन्वर्थनामकः ॥७८॥ ॥ इति समुदायः ॥३६॥

---

[1] A. वाद्यखंडे कृते G. वाद्ये खंडेकृते  [2] G. ०नैक०

[3] G. repeats here इति समः पाटः केवलपाटैस्तु······॥ इति पाटः ॥२९॥ then writes मुहु, cancels it and goes on to ध्रुवकः ॥३०॥ (omitting इति)

[4] G. omits इति वितालः······समुद्भवैः and goes on to इति खलकः ॥३५॥



जोडणी पृथगुक्तानां पाटानां योगतो मता ॥७९॥
॥ इति जोडणी ॥३७॥

[1]लययोगवियोगाभ्यां [2]क्रमात्तालवितालयोः ॥८०॥ ॥ [3]इत्युडवः ॥३८॥

उडवस्तलपाटस्तु[4] मलपोन्मिश्रपाटजः ॥८१॥
॥ इति तलपाटः ॥३९॥

भवेदुट्टवणी किंचिद् विलम्बितलयाश्रया ।
[5]अक्षरैस्तद्धिथोटैर्भिर्व्यापकैर्या निजैः कृता ॥८२॥
पाटैर्विरचिता सा स्यात्, ॥ इत्युट्टवणी ॥४०॥

अथो[6] तुण्डकमुच्यते ।
वादको लघुहस्तत्वाद्यत्र वाद्यादिमध्ययोः ॥
[7]वाद्यैकदेशं वर्गान्तिमयं वाद्यं प्रवादयेत् ॥८३॥
॥ इति तुण्डकः ॥४१॥

अड्डगपाटे यतिः पाटैः सघनैर्ऋजुभिः स्मृता ॥८४॥
॥ इत्यड्डगपाटः ॥४२॥

पैसारः [8]पृथगातोद्यवाद्यजैः खण्डकैः स्मृतः ॥८५॥
॥ इति पैसारः ॥४३॥

॥ इति त्रिचत्वारिंशद्वाद्यप्रबन्धाः ॥

अव्युत्पन्नप्रबोधार्थं[9] प्रबन्धाः कतिचिन्मया ।
उक्ता अनेन मार्गेण परानप्यूहयेत्[10] सुधीः ॥८६॥

नाना पाटा वाद्यभेदाः प्रबन्धा वाद्याज्जाताः पूर्वमुक्ता मया ये ।
ते [ऽ] मी सर्वे स्युर्यथायोगतोऽत्र प्रायो योज्या ज्ञैर्मृदङ्गादिकेषु ॥८७॥

[11]यद्यात्रोद्धुरसिन्धुरा रवमिलद्वाद्यप्रबन्धोद्धत-
ध्वानः कानपि मूर्छयन् प्रतिरवैर्वित्रासयन् कानपि ।
मायान्तु स्थिरतां व्रजन्तु न च मे मोक्षोऽस्ति वो जीवता-
मित्यं कोणगतागतैः प्रतिरणं प्रत्यर्थिनो जल्पति ॥८८॥

इति [12]श्रीराजराजेश्वरेण श्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीत-मीमांसायां वाद्यरत्नकोशे अवनद्धोल्लासे वाद्यप्रबन्धपरीक्षणं तृतीयं समाप्तम् ॥

---

[1] A. लययो० (omits ०ग)  [2] G. gives क्रमात्तालवियोगाभ्यां

[3] G. gives उडव० of the next verse before इत्युडवः

[4] G. ० पाटैस्तु  [5] G. अक्षरेस्तद्धिथोटं

[6] G. अथ  [7] G. वाद्यैर्व्यं०  [8] A. पृथगातोघ०

[9] G. ० प्रबंधार्थ  [10] G. ० प्यूहायत् (gives पूर्वमात्रा for ` on य)

[11] G. यत्राघोद्धुर  [12] G. श्री राजाधिराजमहीमहेन्द्रेण श्रीकुम्भकर्णेन ।

## पटहादि नाम चतुर्थं परीक्षणम्

अवनद्धाननं येन प्रतिबद्धाननं[1] विदाम् ।
कृतमद्धा [ऽऽ] ननं येन तं वन्दे चतुराननम् ॥१॥

अथावनद्धवाद्यस्य पटहादेर्निरूप्यते ।
लक्षणं, द्विविधस्तत्र पटहः परिकीर्तितः* ॥२॥

मार्गदेशीविभेदेन, तत्रादौ मार्ग उच्यते ।
सवितस्तिकरद्वन्द्वं दैर्घ्ये स्यात् परिधौ पुनः ॥३॥

षष्ट्यङ्गुलो मध्यदेशे पृथुः खदिरदारुजः ।
उत्तमो बीजकाष्ठादिकृतो धातुमयोऽपि[2] वा ॥४॥

दक्षिणं वदनं तस्य स्यात् सार्धैकादशाङ्गुलम् ।
वामं तु वदनं कार्यं सार्धैर्दशभिरङ्गुलैः ॥५॥

दक्षिणे वदने तस्य वलयं लोहनिर्मितम् ।
वामे च वलयं वक्त्रे कार्यं वल्लीसमुद्भवम् ॥६॥

षाण्मासिकस्य [3]वत्सस्य व्यसोरादाय पारिकाम् ।
[4]तयावगुण्ठ्य वलयं वामं[5] वल्लीसमुद्भवम् ॥७॥

अङ्कितं सप्तभिश्छिद्रैः [6]सूक्ष्मसूक्ष्मतरैर्दृढम् ।
तत्र सप्तसु रन्ध्रेषु [7]निःक्षिप्तैः [8]सूक्ष्मदोरकैः ॥८॥

कलशाः सप्त हेमादिधातुभेदविनिर्मिताः ।
नियन्तव्याः श्लथतरं दैर्घ्येण चतुरङ्गुलाः ॥९॥

पटहस्य च वामास्यात्त्यक्त्वाऽङ्गुलचतुष्टयम् ।
विस्तारतस्त्र्यङ्गुलया स्वर्णादिकृतया ततः ॥१०॥

वेष्टयेत् पटहं कण्ठे तया पत्रिकया दृढम् ।
बाह्यं[9] कायस्य यच्चर्म पशोस्तत्कवलं स्मृतम् ॥११॥

कृतान्तसुखिना तेन घनेन वदनद्वयम् ।
पिदध्यादस्य वदने दक्षिणे, कवलं पुनः ॥१२॥

---

[1] G. ० नद्धाननं   *cf. S. R. VI 805—27 for 2—28 in our text.
[2] G. ० मयोऽथवा   [3] G. omits वत्सस्य   [4] A. तया०
[5] G. omits अनुस्वार   [6] G. शूक्ष्मशूतरै०   [7] A. निक्षिप्तैः
[8] G. शूक्ष्म० A. सूत्र०   [9] A. बाह्य० (omits अनुस्वार)



सर्वतो विहितच्छिद्रं विदध्याद् वाद्यसिद्धये ।
गुणैः सुषिरनिक्षिप्तैर्गाढमाकृष्य यत्नतः ॥१३॥

वामवक्त्रस्य वलये सप्तरन्ध्रनिवेशितान् ।
गुणानाकृष्य सुदृढं यथास्थानं निवेशयेत् ॥१४॥

वामास्य-[1]वलयप्रान्तसप्तच्छिद्रनिवेशितैः ।
तैर्गुणैः [2]स्वर्णकलशानावेष्ट्य विधिवत् सुधीः ॥१५॥

दक्षिणास्यस्य वलये लौहे प्रक्षिप्य मध्यतः[3] ।
सम्यक् कृष्टैस्तु सुदृढैर्वलयं गाढतां नयेत् ॥१६॥

कलशेभ्यो बहिर्वामवल्लीवलयपल्लवे ।
कच्छाकटीवेष्टनाय साञ्चला बध्यते दृढा ॥१७॥

इत्येवं मार्गपटहो लक्षितः शास्त्रमार्गतः ।
देवता देवतानाथेनोक्ता [4]स्वस्मिन् षडाननः[5] ॥१८॥

दैर्घ्येऽध्यर्धकरो[6] देशीपटहः परिकीर्तितः ।
दक्षिणं वदनं तस्य मितं सप्तभिरङ्गुलैः ॥१९॥

वामं [7]च वदनं तस्य भवेत् सार्धषडङ्गुलम् ।
यदा(द)न्तरं पशोश्चर्म जाठरं तत् प्रकीर्तितम् ॥२०॥

उद्दलीसंज्ञकं तेन वामं वक्त्रं विधीयते ।
यन्मया मार्गपटहे लक्षणं प्रागुदीरितम् ॥२१॥

तदशेषं विधातव्यममुष्मिन् पटहे बुधैः ।
उत्तमादिविभेदेन त्रिधाऽसौ द्विविधो भवेत् ॥२२॥

तत्रायमुत्तमः प्रोक्त[8] उक्तमानविनिर्मितः ।
द्वादशांशविहीनोऽतो मध्यमः पटहो भवेत् ॥२३॥

अधमस्तु भवेदस्मात् षष्ठांशेनोनितस्तु यः ।
देशीपटहमेवेमं जना [9]अड्डावजं जगुः ॥२४॥

उद्दल्यामत्र झेंकारो डेंकारः कवलेऽधिकः ।
अन्येऽनयोः पाटवर्णा उक्ताः पाटपरीक्षणे ॥२५॥

---

[1] G. ०कवलं···रन्ध्रनिवेशितान् (omits प्रान्त)   [2] G. स्वर्ग
[3] A. मध्यमः   [4] G. स्वस्मिन्   [5] G. ०ननम्
[6] G. ०ध्यर्द्धरो   [7] G. तु   [8] G. प्रोक्तमानविनिर्मितम्
[9] G. अद्यवमं

वादनाय भवेदस्य कोणस्त्वष्टादशाङ्गुलः ।
पृथुर्मध्ये ततः किंचिदग्रे सिक्थकवाससा ॥२६॥

मूले प्रवेष्टितः कार्यो वादकेन विजानता ।
[1]अथैनं वादयेद् विद्वान् निषण्णः पङ्कजासने ॥२७॥

गोष्ठीषु मार्गपटहः स्थाप्य ऊरुद्वयोपरि ।
घटवाद्यवदुत्तानवदनो नाटकादिषु ॥
कोणेन हस्ततो यद्वा वाद्यते पाटपण्डितैः ॥२८॥

॥ इति पटहः ॥१॥

*अथोच्यते हुडुक्काया लक्ष्मोद्देशक्रमागतम् ।
वितस्तिद्वितयं दैर्घ्ये वितस्तिद्वितयं पुनः ॥२९॥

चतुर्भिरङ्गुलैर्युक्तं परिधावङ्गुलोन्मिता ।
पिण्डे सप्ताङ्गुले वक्त्रे मण्डल्यौ[2] वक्त्रयोः पुनः ॥३०॥

एकादशाङ्गुले वल्लीसंभवे स्थौल्यतः पुनः ।
सपादाङ्गुलके स्यातामुद्वलीकृतबन्धने ॥३१॥

सवक्त्रे चैतयोः कार्यं रन्ध्रषट्कं तयाग्रतः ।
बन्धरज्जुनिवेशार्थं विदधीतार्गलात्रयम् ॥३२॥

पश्चाद्भागेऽर्गलाद्वन्द्वमन्ततः[3] कलशान्वितम् ।
ततो निधीयते मध्ये [4]बन्धरज्ज्वन्तरे तथा ॥३३॥

अङ्गुलत्रयविस्तीर्णा मनोज्ञोदरपट्टिका ।
द्वात्रिंशत्तन्तुग्रथितरज्ज्वा कक्षाद्वयं दृढम् ॥३४॥

[5]बध्वा निवेश्यते [6]तज्ज्ञैर्द्विगुणा स्कन्धपट्टिका ।
तत्रोत्कक्षकसंस्था च कुर्यात् पादाङ्गुलोन्मितम् ॥३५॥

रन्ध्रं[7] तस्याश्चतुर्थांशे नादनिर्मुक्तिहेतवे ।
हुडुक्कैषा स्मृता अस्यां देवताः सप्तमातरः ॥३६॥

निधाय स्कन्धदेशे च वादकस्कन्धपट्टिकाम् ।
धृत्वा वामेन हस्तेन रम्यामुदरपट्टिकाम् ॥३७॥

हुडुक्कावादनं कुर्यात्तज्ज्ञो दक्षिणपाणिना ।
देंकारवर्जितानत्र[8] मज्जकारसमन्वितान् ॥३८॥

---

[1] G. अथिनं
*cf. S. R. VI 1068—77 for 29—39 in our text. [2] G. मंडल्ये
[3] G. ० मन्तः कमलशान्वितं [4] A. बद्धा [5] A. looks like बद्धा
[6] A. तज्ञै० G. नद्ज्ञै० [7] A. रंध्रां [8] G. ० स्मत्र



कुर्वीत व्यापकान् वर्णान् कादिकान् पाटकोविदः ।
लोके स्कन्धावजमिमामावजं च प्रचक्षते ॥३९॥

॥ इति हुडुक्का ॥२॥

*पटहस्य हुडुक्कायाः कथ्यते सञ्चपञ्चकम् ।
स्कन्धस्य मणिबन्धस्य [1]कूर्पराङ्गुष्ठयोस्तथा ॥४०॥

वामस्य चरणस्यापि कम्पनं सञ्च उच्यते ।
तत्र स्याद् वादकः श्रेष्ठः पटहेऽङ्गुष्ठसञ्चतः ॥४१॥

[2]मणिबन्धस्य सञ्चेन तत्रासौ मध्यमः स्मृतः ।
नीचः पटहवाद्ये स्यात् स्कन्धकूर्परसञ्चतः ॥४२॥

अङ्गुष्ठकूर्परस्कन्धसञ्चात्[3] हौडुक्किको वरः ।
मध्यमो मणिबन्धस्य कूर्परस्य च सञ्चतः ॥
वामाङ्घ्रिप्रसञ्चादधमो वादकस्त्वावजे मतः ॥४३॥

॥ इति पटहावजयोः पञ्चसञ्चलक्षणम् ॥

†एकविंशत्यङ्गुला या दैर्घ्ये हस्तमिताऽथवा ।
[4]सार्धहस्तमितं मानं [5]चतुरङ्गुलकाधिकम् ॥४४॥

परिधौ दधती वक्त्रे द्वादशाङ्गुलकेऽथवा ।
चतुर्दशाङ्गुले चर्मबन्धने सूत्रवेष्टिते ॥४५॥

मण्डल्यौ लोहजे चैव दधती परिधौ पुनः ।
मिते ते च समे श्लक्ष्णे द्वाचत्वारिंशताङ्गुलैः[6] ॥४६॥

ततश्चतुर्दश [च्] छिद्रं वलयद्वितयं [7]भवेत् ।
मुखयोः कवलव्याप्तं तन्त्रीत्रितययुक्तयोः ॥४७॥

[8]निःक्षिपेद्विग्निकास्तत्र रन्ध्रेष्वेष्वन्तरक्रमात् ।
द्वाभ्यां द्वाभ्यां ततस्तासां विग्निकाभ्यां यथाक्रमम् ॥४८॥

मत्स्याकृति[9] दृढं बन्धं कृत्वा कच्छां[10] प्रकल्पयेत् ।
प्रान्तयोः [11]संयतप्रान्तां स्कन्धे वाथ कटीतटे ॥४९॥

---

*cf. S. R. VI 896—99 for 40—43 above. [1] G. कूर्मयार्परां०
[2] G. omits मणिबन्धस्य...... ......................सञ्चतः (upto second line of verse 43). [3] According to मन्धि the reading here should be ० सञ्चाद्धौडुक्किकां
† cf. S. R. VI 1078—1169 for 44—137 in our text.
[4] G. adds सार्धहस्तमिताथवा before this line. [5] G. ० काभिधम्
[6] G. ०गुलौ [7] G. तथा [8] A. निक्षि०
[9] G. ०कृतं [10] G. कछां च कल्पयेत् [11] A· संयतः

धृत्वा तां[1] वादयेद् विद्वान् कोणाभ्यां बीजवृक्षजाम् ।
खदिरद्रुमजं वापि चर्चिकाह्वयदेवताम् ॥५०॥

करटेति पट्टप्रायपाटवर्णविराजिताम् ।
[2]टिरिकीतिकिटीरीतिपाटद्वन्द्वपटूत्कराम् ॥५१॥ ॥ इति करटा ॥३॥

महोदरः स्वल्पवक्त्रः सुपक्वो मञ्जुलो घनः ।
चर्मनद्धाननो वाद्यः कराभ्यां वादकैर्घटः ॥
पुष्करत्रितयप्रोक्तपाटवर्णविराजितः ॥५२॥
॥ इति घटलक्षणम् ॥४॥

हुडुक्कातः प्रभेदो यो घट(ड)से स विविच्यते ।
एतस्य तूद्दलीनद्धा दक्षिणास्यस्य मण्डली ॥५३॥

कर्तव्या वामवक्त्रस्य मण्डली रज्जुयन्त्रिता ।
गोंकारपाटवर्णाढ्यो वाद्यते वादकोत्तमैः ॥५४॥

मुहुर्दक्षिणहस्तस्य मध्यमाङ्गुष्ठयोस्तथा ।
मदनाक्ताग्रदेशाभ्यां घट(ड)से घर्षणं तथा ॥५५॥

सर्वाभिर्वामहस्तस्याङ्गुलीभिः[3] परिवाद्यते ।
वामाङ्गुष्ठेन निःपी(निष्पी)ड्येत्युक्तोऽयं घट(ड)सो मया ॥५६॥
॥ इति घट(ड)सलक्षणम् ॥५॥

वितस्तिद्वितयायामे[4] वितस्तित्रितयं तथा ।
सत्र्यङ्गुलं तु परिधौ वल्लीवलयसंयुते ॥५७॥

द्वादशाङ्गुलके वक्त्रे प्रत्येकं वलयद्वये ।
[5]बिभ्राणात् (णः) सप्तरन्ध्राणि यस्तुण्डे कवलेन हि ॥५८॥

आनद्धे रन्ध्रनि[ः] क्षिप्तरज्जुभिर्गाढयन्त्रितः ।
स प्रोक्तो ढवसः स्कन्धे कच्छामासज्य यत्नतः ॥५९॥

ढक्कारपाटबहुलो वामहस्तेन वाद्यते ।
वामास्ये, दक्षिणे तुण्डे कुडुपेन तु वाद्यते ॥
ट(ढं)कारपाटवसतिरतोऽसौ ट(ढ)वसो जने ॥६०॥
॥ इति ढवसः ॥६॥

[1] A. तं [2] G. टिरिकीविकटीरीति
[3] G. ०हस्ताभ्यांगुलीभिः [4] G. ०मो
[5] G. omits विभ्राण०······अप्टांगुलं चर्म (second half of verse 58 upto the third foot of verse 75) and takes up विबद्धमंडलीयुतमेव च here.



ढक्का च ढवसेनैव निगदाख्यातलक्षणा ।
किन्तु त्रयोदशाङ्गुले वदने परिकीर्तिते ॥६१॥

ढेंकारपाटवर्णाढ्या धृत्वैतां वामपाणिना ।
दक्षिणेन सकोणेन वाद्यते वाद्यवेदिना ॥६२॥
॥ इति ढक्कालक्षणम् ॥७॥

अनर्गला हुडुक्कैव कुडुक्का परिकीर्तिता ।
वाद्यते हस्तकोणाभ्यां क्षेत्रपालाधिदेवता ॥६३॥ ॥ इति कुडुक्का ॥८॥

अङ्गुलैरेकविंशत्या मिताऽऽयामे समाकृतिः ।
बीजवृक्षोद्भवा सप्ताङ्गुलगर्भमुखद्वया ॥६४॥

वर्तुलत्र्यङ्गुलस्थौल्ये सप्तच्छिद्रसमन्विते ।
रन्ध्रे प्रक्षिप्य तन्त्रीभिर्वक्त्रयोः कृतबन्धना ॥६५॥

कवलाभ्यां समानद्धे वल्लीजे वलये मुखे ।
दधाना प्रान्तयोः कच्छां दृढां बद्ध्वा प्रवाद्यते ॥६६॥

झेंकारपाटवर्णाढ्या कुडुवा त्यक्तझेंकृतिः ।
हुडुक्काप्रायपाटाढ्या वादनीया विचक्षणैः ॥
मदनेन प्रलिप्ताभ्यां कुडुपाभ्यामिह स्फुटा ॥६७॥ ॥ इति कुडुवालक्षणम् ॥९॥

अष्टादशाङ्गुलायामे वदने कुण्डलीयुते ।
एकादशाङ्गुले स्यातां नद्धव्ये चर्मणा दृढम् ॥६८॥

तत्र यद्वामवक्त्रान्तर्वर्तते कुण्डलीद्वयम् ।
तत्रैका वक्त्रमात्रा स्यादपरा चतुरङ्गुला ॥६९॥

कुण्डल्योरन्तरे तत्र कर्तव्या स्नायुजालिका ।
सैकरन्ध्रमुखं वामं सूत्रतन्त्रीप्रधारितम् ॥७०॥

प्रत्येकं विग्निकाः सप्त न्यस्यन्ते वक्त्रयोर्द्वयोः ।
अष्टादशाङ्गुलां नागपाशबन्धनियन्त्रिताम् ॥७१॥

कच्छां स्कन्धे समासज्य वाद्यविद्भिः प्रवाद्यते ।
झंकारपाटबहुला मनोज्ञा भृङ्गिदैवता ॥७२॥

अत्र कैश्चिदिमे वर्णाः कर्तदा डनगा रखौ ।
प्रोक्तास्त्वन्यैरिमे वर्णाः करगा घटमाः खहौ ॥७३॥

झंकारजननाद्रुञ्जा आख्याता वाद्यगोचरे ।
समाकृतिर्विधातव्या वाद्यविद्याविशारदैः ॥
कर्परा वाद्यशास्त्रेऽस्मिन् विग्निका इति कीर्तिता ॥७४॥
॥ इति रुञ्जालक्षणम् ॥१०॥

डमरुर्हस्तमात्रः स्याद्दैर्घ्ये वक्त्रद्वयं तथा ।
अष्टाङ्गुलं [1]चर्मबद्धमण्डलीयुतमेव च ॥७५॥

बधानः क्षाममध्यश्च निबद्धः सूत्रदोरकैः ।
बधानो वादनस्यार्थं मञ्जुलं गोलकद्वयम् ॥७६॥

अञ्जनीप्रान्तसंबद्धं [2]सिक्थकेन विनिर्मितम् ।
मध्ये विधृत्य हस्ताभ्यां वाद्यो डबडबाक्षरैः ॥
वर्णैः कखरटैर्वाथ डमरुर्वाद्यते जनैः ॥७७॥

॥ इति डमरुलक्षणम ॥११॥

द्वादशाङ्गुलदैर्घ्या च मनाक्(ङ्)मध्ये कृशा च या ।
अर्धाङ्गुलमिता पिण्डे स्यातामष्टाङ्गुले मुखे ॥७८॥

वदनं प्रति [3]चत्वारः शङ्कवस्ताम्रनिर्मिताः ।
तन्त्रीभ्यां द्वावधः शङ्कू द्वावूर्ध्वं यन्त्रणाय च ॥७९॥

तन्त्र्योर्न्यस्येन्नादपुष्ट्यै[4] शलाकां तृणनिर्मिताम् ।
शेषमत्र हुडुक्कावत् पाटवर्णादिकं मतम् ॥८०॥

कोणोऽस्या वादने प्रोक्तो द्वादशाङ्गुलदैर्घ्यभाक् ।
अस्याः करेण कोणेन केचिदूचुः प्रवादनम् ॥८१॥

[5]झांकृतिः करघातेन जायते कुडुपेन तु ।
घटस्तटो डगिश्चेति मुख्याः प्रोक्ताः पुरैव हि[6] ॥८२॥

निगौ कखरटाश्चेति[7] देवता विन्ध्यवासिनी ।
त्रिधा सा भिद्यते तत्रोत्तमा[ऽऽ]द्यं भेदमाश्रिता ॥८३॥

उत्तमा तूक्तमानेनाङ्गुलोना[8] मध्यमा स्मृता ।
अङ्गुलद्वितयेनोना डक्का प्रोक्ता कनीयसी ॥८४॥

॥ इति डक्कालक्षणम्[9] ॥१२॥

मण्डिडक्का तु डक्कैव सायामे षोडशाङ्गुला ।
अष्टाङ्गुलमुखी मध्यपरिधौ षोडशाङ्गुला ॥८५॥

कच्छार्गलाभ्यां रहिता भवेदुत्कक्षकस्त्विह ।
मध्यमाञ्चनिकाद्वन्द्वमुत्कक्षं त्वाञ्चनीद्वयम् ॥८६॥

---

[1] G. बिबद्ध०  [2] G. सिद्धकेन (?)  [3] G. विस्तारः
[4] G. ०तुष्ठ्यै or तुष्ट्यै or नुष्ट्यै ।
[5] A. सांकृतिः  [6] G. नु  [7] G. omits ०ति
[8] G. ०लेना  [9] G. omits लक्षणम्



धृत्वा वामकराङ्गुष्ठत्र्यङ्गुलीभिर्नि[ष्]पीड्य च ।
तर्जनीमण्डलीप्रान्तन्यस्तं दक्षिणपाणिना ॥८७॥

अथवा मणिबन्धोर्ध्वं क्षिप्त्वा कक्षाञ्चनीद्वयम् ।
[1]कनिष्ठानामिकाङ्गुष्ठैर्युक्तमापीड्य[2] मण्डलीम् ॥८८॥

तर्जन्या मध्यमाङ्गुल्या करेणान्येन वादयेत् ।
एतस्या वादनं प्राहुर्हस्तेन कुडुपेन च ॥८९॥

पाटैर्हुडुक्काडक्कोक्तैः शक्तिपूजासु पूजकैः ।
वादनीया [3]मण्डिडक्केत्यूचुर्वाद्यविदो जनाः ॥९०॥

॥ इति मण्डिडक्कालक्षणम् ॥१३॥

कांस्येन दन्तिदन्तेन गोविषाणेन वा भवेत् ।
डक्कुली दैर्घ्यमानेन मिता पञ्चभिरङ्गुलैः ॥९१॥

भवेतां वदने तस्याः संमिते चतुरङ्गुलैः ।
मेषपार्युद्दलीबद्धे[4] [5]स्वस्ववक्त्रसमन्विते ॥९२॥

[6]कांस्यजे [7]लोहजे वाथ ताम्रजे वाथ ते पृथक् ।
पञ्च रन्ध्रे तथोद्दल्यौ छिद्रविन्यस्तदोरकैः ॥९३॥

निबध्येते दृढं सौत्रैस्तथा[8] सूत्रेण वेष्टनम् ।
नातिश्लथं नातिगाढं मध्यसूत्रे त्वनामिकाम् ॥९४॥

विन्यस्य मध्यातर्जन्यौ निधृत्ते वक्त्रसंयुते ।
अन्यस्मिन् वदनेऽङ्गुष्ठं विन्यस्य मदनान्विताम्[9] ॥९५॥

निधायाञ्चनिकामेकां डक्कुलीं वादयेद् बुधः ।
बुंबुंबुंबबपाटार्णसंयुतां[10] मर्दलोदितैः ॥
पाटार्णैः संयुतामेतां वाद्यामित्यपरे जगुः ॥९६॥

॥ इति डक्कुली[11] ॥१४॥

सेल्लुका बीजवृक्षोत्था दैर्घ्ये षट्त्रिंशदङ्गुला ।
परिधौ[12] संमिता कार्या विद्वद्भिस्त्रिंशदङ्गुलैः ॥९७॥

समा दशाङ्गुले वक्त्रे मिते[13] चैकादशाङ्गुलैः ।
नद्धव्ये तूद्दलीभ्यां [14]तेऽधिकाभ्यामङ्गुलेन तु ॥९८॥

---

[1] G. काङ्गुष्ठो  [2] G. म्यापीड्य  [3] G. ०डक्कै
[4] G. ०मध्ये  [5] G. स्वस्ववक्त्र०  [6] A. कांस्ये
[7] G. लोहलेजे  [8] G. repeats ०स्तथा  [9] G. ०तं
[10] G. मंगुला  [11] A. adds विसर्ग  [12] G. सन्निभा
[13] G. मितै  [14] A. तेतिकाभ्या०

वल्लीजं वलयद्वन्द्वं तर्जनीस्थौल्यसंयुतम् ।
सरन्ध्रषट्कं बिभ्राणा वक्त्रयोः सूत्ररज्जुभिः ॥९९॥

रन्ध्रक्षिप्तैर्दृढं बद्धा वाद्या वादनकोविदैः ।
सेल्लुका वामवदने तंत्रिकार्गभिते सति ॥१००॥

वाद्या वामकरेणास्या[1] दक्षिणे वदने तथा ।
दक्षिणेन सकोणेन खिकारो वामवक्त्रगः ॥
धि(धिं)कारो दक्षिणे वक्त्रे मुख्यपाटविभूषिता ॥१०१॥

॥ इति सेल्लुका ॥१५॥

अष्टादशाङ्गुलो यस्याः परिधिर्द्वादशाङ्गुला ।
दैर्घ्ये सा झल्लरी पञ्चविंशत्या निर्मिता पलैः ॥१०२॥

कण्ठे सूत्रद्वयोपेत-सुषिरद्वयसंयुता ।
चर्मणा नद्धवदना सुसमा यमदैवता ॥
वाद्या दक्षिणहस्तेन धृत्वा वामेन पाणिना ॥१०३॥

॥ इति झल्लरी ॥१६॥

भाणोऽङ्गुलैः[2] स्यात् परिधौ मितो द्वादशभिस्तथा ।
नवभिस्तु पलैः क्लृप्तोऽथवा द्वादशभिर्भवेत् ॥१०४॥

सार्धझंल्लरिकावत् स्याच्छेषं लक्षणमस्य तु ।
अनुक्ताविह धातूनां ग्रहः[3] स्यात्ताम्रकांस्ययोः ॥१०५॥

॥ इति भाणलक्षणम् ॥१७॥

त्रिवली हस्तदैर्घ्या स्यात् सप्ताङ्गुलमुखद्वया ।
[4]मुष्टिनिर्ग्राह्यमध्या स्यात् कवला [5]वृत्तवक्त्रका ॥१०६॥

आयस्यौ ताम्रमण्डल्यौ सप्तरन्ध्रान्विते पृथक् ।
दोरकैः रन्ध्रनिक्षिप्तैः कवलानद्धयोर्द्वयोः ॥१०७॥

वक्त्रयोर्गाढमाबध्य कार्यं मध्ये प्रवेष्टनम् ।
तत्र हस्तमिता कच्छा सूत्ररज्जुविनिर्मिता ॥१०८॥

स्कन्धावलम्बिनी कार्या करयुग्मेन वादनम् ।
[6]तेंदोंदोंदेति वर्णाः[7] स्युस्त्रिपुरा चात्र देवता ॥१०९॥

इयमेव त्रिकुल्यन्यैर्विंशत्यङ्गुलदैर्घ्यभाक् ।
एकादशाङ्गुलमुखी मध्यदेशे[8] पुनर्मिता ॥११०॥

---

[1] G. ०करेण स्याद्　[2], [3] A. omits विसर्ग
[4] G. ०निर्ग्राह्यो०　[5] G. वक्त्रवृत्तका
[6] G. तेंदोंदेंति　[7] A. omits विसर्ग　[8] G. ०देशेपु निर्मिता



अङ्गुलैः पञ्चभिः सार्धमध्ये चाञ्चनिकायुता ।
[1]तदर्धपाटवर्णाढ्या वाद्यते तद्विदां वरैः ॥१११॥

॥ इति त्रिवली ॥१८॥

दुन्दुभिः स्यान्महागात्रो महानादोऽतिमञ्जुलः ।
[2]आम्रद्रुमसमुद्भूतो वलयाभ्यां विवर्जितः ॥११२॥

कांस्यभाजनसंभारगर्भो वध्रैः समन्ततः ।
गाढं बद्धश्चर्मनद्धवदनोऽयं प्रवाद्यते ॥११३॥

चर्मनिर्मितकोणेन महाप्राणेन दुन्दुभिः ।
मेघनिर्घोषगम्भीरध्वानो[3] [4]धोंकारपाटभाक् ॥
मङ्गले विजये देवमन्दिरे च प्रवाद्यते ॥११४॥

॥ इति दुन्दुभिः[5] ॥१९॥

सार्धहस्तमिता यामा वदने हस्तसंमिता ।
ताम्रेण निर्मिता कार्या वक्त्रयोर्वलये पुनः ॥११५॥

चर्मनद्धे छिद्रयुक्ते रज्ज्वा गाढं नियन्त्रिते ।
मध्ये बद्धा[6] सूत्रबन्धैर्दक्षिणे वदने पुनः ॥११६॥

दक्षिणस्थेन कोणेन वामे वामेन ताड्यते ।
ठकारपाटवर्णाढ्या भेरी भीरुभयंकरा ॥११७॥

गम्भीरोद्भटनिः(नि)स्वाना वाद्या राजेन्द्रशासनात् ।
केचिद्बंबंधडान् पाटानत्रेच्छन्ति महाधियः ॥११८॥

॥ इति भेरीलक्षणम्[7] ॥२०॥

निःसान(ण)स्त्वेकवक्त्रः स्यात् स त्रिधा परिकीर्तितः ।
उत्तमः कांस्यजस्ताम्रनिर्मितो मध्यमः स्मृतः ॥११९॥

अधमो लोहघटितो ह्रस्वोऽधस्तान्मुखे महान् ।
चर्मणा माहिषेणायं गाढं वक्त्रे सुयन्त्रितः ॥१२०॥

वध्रैः सुषिर-[8]निःक्षिप्तैर्निवेश्य वलये मुहुः ।
व्यावर्तितैर्नद्धचर्मा मेघगम्भीरनिस्वनः ॥१२१॥

---

[1] A. G. तदृद्धे (A. ०ध्ये द्वे)　[2] A. ताम्रद्रुन०
[3] G. मेघगम्भीरनिर्घोषध्वानो　[4] A. घो० G. ध्वों०
[5] G. repeats here मेघगम्भीर०……इति दुंदुभिः and cancels the first writing from ०घ० to धों० with a vertical stroke slightly curved on top towards the left. at each end.
[6] G. बध्वा　[7] G. omits ० लक्षणम्　[8] A. नि०

वैरिवित्रासजननो भीरुहृद्भेदनो प(ब)रः ।
शूररोमाञ्चजनको युद्धे[1] प्रोत्साहकारकः ॥१२२॥

धटद्धटेतिशब्देन व्याप्तसर्वरणाङ्गणः ।
चर्मकोणेन वाद्योऽयं सद्वितीयो महाभटैः ॥१२३॥

॥ इति निःसान(ण)लक्षणम् ॥२१॥

निःसान(ण)वत्त(त्तु)म्बकी स्यात्ततोऽल्पा गात्रनादयोः ।
वाद्यते सद्वितीयोऽसौ दमामेति निगद्यते ॥१२४॥

॥ इति त(तु)म्बकी ॥२२॥

अन्येऽपि सन्ति भूयांसो भेदा आनद्धसंश्रयाः ।
ऊहनीयाः स्वयं तेऽत्र राजराजोपदेशतः ॥१२५॥

॥ इत्यवनद्धवाद्यलक्षणम् ॥

अनुक्ता यत्र पाटाः स्युर्वाद्ये दारवसंज्ञके ।
तत्र पाटाः प्रकर्तव्या व्यापकाक्षरगुम्फनैः ॥१२६॥

विशिष्य यत्र नोक्तं स्याद् दारुवाद्यविनिर्मितौ ।
खदिरस्तत्र विज्ञेयो बुधैर्वा रक्तचन्दनः[2] ॥१२७॥

प्रायो दोषानुषङ्गेण त्रिविधा भूरुहाः स्मृताः ।
[3]अत्र स्युः पित्तला[:]केचित् केचिद्वातसमाश्रयाः ॥१२८॥

केचित् स्युः श्लेष्मकास्तत्र पित्तला उत्तमाः स्मृताः ।
मध्यमा वातलास्त्याज्या अधमाः श्लेष्मजातयः ॥१२९॥

तत्र नीरसभूजाताः पित्तला, वातलाः पुनः ।
भुवि स्वल्परसायां ये[4] संभूताः[5] श्लेष्मलाः[6] पुनः ॥१३०॥

उपतोयाशयं जाता रसविप्लावितक्षितौ ।
उत्तमास्तरवस्तत्र प्रशस्ता वाद्यकर्मणि ॥१३१॥

छिन्नः पुनः प्ररूढो यः[7] सोऽपि ज्ञैरुत्तमः स्मृतः ।
तथा वाताहतो जीर्णो गर्भेण रहितस्तरुः ॥१३२॥

वेणोरन्यः[8] स्मृतस्तज्ज्ञैः प्रशस्तो वाद्यकर्मणि ।
जठरस्त्वव्रणो ग्रन्थिभेदाद्यैरुज्झितस्तरुः ॥
प्रशस्तस्तद्विपर्यासादप्रशस्तः[9] स्मृतो बुधैः ॥१३३॥

॥ इति काष्ठगुणदोषाः[10] ॥

---

[1] G. युद्ध  [2] A. ०नैः
[3] G. omits two lines अत्र······स्मृताः and takes up मध्यमा etc.
[4] G. यो ये  [5] G. omits विसर्ग  [6] A. omits विसर्ग
[7], [8] G. omits विसर्ग  [9] A. omits विसर्ग  [10] A. ०षो



चर्म षाण्मासिकस्योक्तं[1] वत्सस्य पुटबन्धने ।
द्विवत्सरस्य केऽप्याहुनं तथा लक्ष्म(क्ष्य?)वर्त्मनि ॥१३४॥

वदन्ति वध्रनिर्माणं जरद्वृषभचर्मणः[2] ।
कुन्देन्दुकान्तिनिर्मांसं [3]चर्म स्नायुविवर्जितम् ॥१३५॥

रसालपल्लवप्रख्यं गोमतल्लीसमुद्भवम् ।
एकरात्र्युषितं [4]तोये वाद्यावनहने शुभम् ॥१३६॥

अक्षुण्णमक्षतं भेदरहितं निर्जरं[5] नवम् ।
वह्निधूमादिविक्लेदरहितं दोषवर्जितम् ॥
शस्तमेतद्विपर्यासादशस्तं चर्म कीर्तितम् ॥१३७॥

॥ इति चर्मगुणदोषौ[6] ॥

*विघुष्टं मधुरं रक्तं घनं शुद्धं कलं समम् ।
स्फुटप्रहारं सुभगं विभक्तमिति [7]सद्गुणैः ॥१३८॥

दशभिः संयुतं यत्स्यात्तद्वाद्यं[8] वाद्यमुच्यते ।
अन्वर्थसंज्ञा एताः[9] स्युः समं तत्राष्टधा मतम् ॥१३९॥

यतिपूर्वमपन्यासपूर्वमक्षरपूर्वकम् ।
न्यासपूर्वं तालपूर्वभङ्गपूर्वं लयादिकम् ॥१४०॥

तथा पाणिसमं चेति तद्विविच्य प्रदर्श्यते ।
यतेर्लयस्यापन्यासन्यासयोरपि साम्यतः ॥१४१॥

यत्यादिपूर्वक्रमतः प्रोक्तं समचतुष्टयम् ।
गुरुलघ्वक्षराण्यत्र गीतस्यान्वेति यत्स्फुटम् ॥१४२॥

तदक्षरसमं, तालसमं तालानुगं स्मृतम् ।
ग्रहमोक्षादिकान्यत्र गीताङ्गानि च यत्समम् ॥१४३॥

समन्वेति तदत्रोक्तं गीताङ्गसममादृतैः ।
गीतग्रहैः पाणिसंज्ञैः समं पाणिसमं मतम् ॥
वाद्यस्यैते गुणा, दोषाः विपर्यस्तास्त एव हि ॥१४४॥

॥ इति वाद्यगुणदोषाः ॥

उत्तमो वादकः प्रोक्तो[10] गीतवादनपण्डितः ।
सञ्चपञ्चकनिष्णातो हस्तकोणप्रहारवित् ॥१४५॥

---

[1] G. omits अनुस्वार  [2] G. ०णा
[3] G. confuses this portion as चर्मांसं चर्म यत्स्नायुर्वजितम्
[4] G. omits तोये  [5] G. जंवं रं  [6] G. ०षै
* cf. S. R. VI 1207-19 for 138-52 in our text.
[7] G. तगुणैः  [8] A. ०स्यात्तं वाद्यं  [9] A. omits विसर्ग  [10] G. ०क्ता

दशहस्तगुणः श्लाघ्यो [1]लयज्ञः पाटकोविदः ।
यतितालविदां श्रेष्ठो गीतनृत्यप्रमाणवित् ॥१४६॥

आतोद्यनिस्वनज्ञाता [2]ग्रहमोक्षविचक्षणः ।
पात्रवाञ्छितविस्पष्टवादनक्रमवेदिता ॥१४७॥

तत्तत्समस्तवादित्रप्रभेदानां विवेचकः ।
समादिग्रहभेदज्ञो नादवृद्धिक्षयादिवित् ॥१४८॥

नर्तकस्य तथा गातुः (तुश्) छिद्रमुद्रणतत्परः ।
एभिर्गुणैरुपेतो यो वादकप्रवरस्तु सः ॥
कियद्भिरपि सर्वैर्वा[3] गुणैर्हीनोऽधमो मतः ॥१४९॥
॥ इति वादकगुणदोषः[4] ॥

अथ हस्तगुणान् वच्मि पूर्वाचार्यैः प्रदर्शितान् ।
विधेयाङ्गुलिसंचारचातुरीपरिशीलनौ[5] ॥१५०॥

पात्रात्मवाञ्छानुगतिप्राज्ञौ स्वेदविवर्जितौ ।
प्रहारलाघवोपेतौ स्निग्धौ दार्ढ्यगुणाञ्चितौ ॥१५१॥

युक्तघातविवेक्तारौ नखप्रागल्भ्यचञ्चुरौ ।
पाटवर्णोद्भवव्यक्तौ वाद्यस्फीतजितश्रमौ ॥
हस्तावेभिर्गुणैर्युक्तौ शक्रावुक्तौ मनीषिभिः ॥१५२॥
॥ इति दश हस्तगुणाः ॥

[6]यत्पारायणनिः(नि)स्वनः पटहनिर्व्याप्तान्तरालो दिशां
साक्षाद् दुन्दुभयन्ति तोयनिधयो यद्दिग्जये सन्ततम् ।
निःसानी (णी)यति तोयदः[7] प्रतिदिनं प्रारब्धदेवाध्वरे
तेनेमे पटहादयो नृपतिना नीताः[8] परीक्षास्पदम् ॥१५३॥

एकोऽनेकविचित्रपुण्यनिचयैर्व्याप्तान्वये सेश्वरः
प्रत्यर्थी पृथिवीहृदीशवशतेः सर्वस्वहेलाहृतैः ।
उल्लासः सकलागमैः स्वहृदये येनात्रितीर्थः[9] कृतः
सूर्यस्तेन नवोऽवनद्धविषये संगीतराजे कृतः ॥१५४॥

[1] G. लज्ञः [2] A. मोह० G. ग्रहक्ष्मोक्ष० [3] G. ०वा

[4] There is a change in handwriting in G. on folio no. 465 (consecutive no.) beginning with ०ष. of ०दोषः. This changed handwriting continues till the end of this परीक्षण (folio 470) with which the वाद्यरत्नकोश and this Ms. end.

[5] G. ० शीलिनौ [6] G. ०परायण० [7] A. G. तोदयः

[8] A. G. नीतास्० [9] A. येनात्रितीयो G. येनातृतीयो



एको भूपैः प्रभूतैश्चरणनिपतनाद्यैरकुप्यैः सरत्नैः
प्रत्नैः[1] पूर्णाद्वितीयः स्वकुलविधृतये भूपतीनां सहस्रैः ।
कन्यारत्नैर्वितीर्णैर्नवनवरुचिरारब्ध[2]-नेपथ्यपूर्णै-
र्वाद्यैः संगीतराजे व्यरचि नृपतिना रत्नकोशस्तृतीयः ॥१५५॥

इति निश्शङ्कनिर्भयमल्लेन सकलभूवलयैकवीरेण कलाकल्याणकुशलेन श्रीकालसेनेन द्वादशसहस्रजनस्थानप्रभृतिवसुन्धरासमुद्धरणैकधीरेण श्रीजगदीशवनदेवनिजगणेन जगदीश्वरी-कामेश्वरीचरणकिङ्करेण श्रीब्रह्माद्रिविभुना प्रथमप्रख्यात-तामराज-आमोदराज-रामराज-पैंकराज-ह्याङ्गराज-तामराजेन्द्र-प्रभृति-सकल-महीपालमौलिमाणिक्य-रचितसिंहासनादिसमस्तप्रशस्तराज-चिह्नाधिष्ठातृ-नरेश्वरेण अगस्तिपुरनिरस्तसमस्तवैरिवर्गेण कामाक्षाप्रसादासादितकुन्तीपुरेण शुद्धोद्धतोद्धतपतिनिपातपटुतरतरवारिधारेण उद्धतपुरनारीनयननीरनिरंतरसारणी-समाप्यायित-शौर्यतरुवरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन मणिपुरमर्द्दनदर्शितशौर्येण कल्याणपुर-जयाजितजामदग्न्येन स्थानवलयितानेकदरीपरिसरपरित्रासितमनीरवीरेण श्रीपुरग्रहणसंवर्धितय-शोभरेण वाटिकाचलग्रहणजनितकीर्त्तिपुरपराजिताचलनायकेन राजपुरीविध्वंसनचारुचाप-रचितेन सुवर्णगिरिखण्डनावनिवज्रहस्तेन नवसारीघनदेवीयुवतिजनवदनयामिनीनाथसिंहिका-सुतायमानकरालवालेन पाटलीरणधरणिधीरधनुर्धोंकारमुखरितत्रिभुवनेन तारापुरप्रज्वालन-समुद्भूतधूममलिनीकृतसकलवैरिवदनेन कुंकुमपुरजयदर्शितसिंहविक्रमेण संज्ञापुरोपार्जितरत्नेन वेदिकागिरिनिर्दलनदारुणेन कुरङ्गगिरिकोटविघट्टनलम्पटोरुनाशीरेण पुण्यस्तम्भोद्धूलनोद्भूता-द्भुतधैर्येण संगमनीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण शुक्लपुरसमूलोन्मूलनप्राप्तजयश्रिया गिरिपुरडुङ्गरग्रहण-[3]सार्थकीकृतोग्रग्रहेण[4] दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन आमर्दक-गिरिशिखरोपरिपरिभावितशकनिकरेण महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरि-प्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण निजभुजशौर्य-वशीकृतबग्गुलराजप्रमुख-महानिधानेन वेरदु (बेद्दुरु) भूपालराजकृतसंस्थापनेन नाराचरणकर्मकर्मठेन तुजारखानमानमर्दन-गृहीतराज्यलक्ष्मीसकलभाण्डागारनिचयेन अलङ्गगिरिगहनगह्वरकुहरविहारिवैरिवीरसिन्धुर-मर्दननिर्दयकण्ठीरवेण अष्टादशगिरिशिखर-परिवारिताञ्जनाद्रिविजयविख्यातवीर्यगर्वेण सप्तविं-शतिसहस्रमहाराष्ट्रधराविधूननप्रबलप्रभञ्जनेन सप्ततिसहस्रगूर्जराम्भोधिमाथ[मन्थ]महीधरेण महदम्बमातृकापुरोद्धूलनधर्षिता(त)महोरगपुरेण पलायमानअजोमखान-सकलगृहीतजयश्रिया जाङ्गलस्थलजलधितरत्तुङ्गतरङ्गसंरम्भकुम्भसंभवेन वस्तिसोपारकलहकलितकुन्तजनितकुन्दावदा-तकीर्त्तिधवलितदिगन्तरेण शशकगिरिलुण्ठनपटुतरेण श्रीवनदेवस्वामिप्रासादरचनापरपरमेश्वरेण श्रीत्र्यम्बकेश्वरसन्निधिकीर्त्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचित-चारुपयेन श्रीकामाक्षागिरिनवीननिर्मितिपराजितसुमेरुणा [5]श्रीमहिषाचलोपरिश्रीहरिशरण-रचिताचलदुर्गेण रायंगुरु-वायंगुरु-सेलगुरुरायाञ्चापरमगुरुवागाङ्गला-रायाञ्चा-रार्यहिसल्लराय-माचल्लपूर्वपश्चिमोत्तरदक्षिणचतुर्दिशां-रायाञ्चाआंबुला-इत्यादि-बिरुदावलीविराजमानेन अभ्यु-ष्टतमनरेश्वरेण सबलराज-सन्मू(म्मू)लनाचार्येण दुर्बलराजसंस्थापनाचार्येण पितृवैरसमुद्भूतरोष-

[1] G. प्र and leaves space blank for one syllable.

[2] A. ०रुचिराब्ध० [3] A. G. ०सामर्थकीकृत०

[4] G. ०ग्रहणेन [5] G. omits श्री०

पोषणमहीपतिमत्तमातङ्गमस्तकाङ्कुशेन अभिनवभार्गवेण राजभुजबलभीमेन हिन्दूकराजगज-पतिना आसनसिंहासनसितातपत्रमाणिक्यमालामण्डितवातान्दोलितजयपताकाकनकदण्डचन्द्राव-दातचलचामरयुगलमकरध्वजादिराजराजालङ्करणावलोकनमत्सरितमानसेतरनृपालमौलिनिहित-वामचरणेन नलनहुषधुन्धुमारभरतभगीरथमान्धातृमेधातिथिप्रभृतिचिर(वीर?) राजरत्नोदात्त-चरितेन वेदमार्गस्थापनचतुराननेन सर्वदात्र्यंबकादिगोदाविमुक्तिसमस्तामुक्तिप्रवितीर्ण[1]मुक्ति-मुक्ताकलापेन श्रीब्रह्मगिरिसन्निधिकृतयुगधर्मानुवृत्ति(वर्त्ति)ब्रह्मवृन्दाधिष्ठितानेक-यज्ञाद्यखिल-सुकृतकृतसत्यलोकेन परमभागवतेन अभिनवभरताचार्येण संगीतमीमांसानिर्माण.परप्रभाकरेण प्रबन्धराजश्रीगीतगोविन्दनिर्माणपरितोषितराधामाधवेन कामाक्षास्तुतिकरणाराधितकामेश्वरी चरणकमलेन श्रीगीतगोविन्दटीकारचनवर्णितसाङ्गश्रृङ्गाररसेन [2]सकलराजवाग्गेयकारतोडर-मल्लेन सकलकविराजचक्रचूडामणिना वीणावादनप्रवीणेन सुशारीरशालिना पद्मनगरजनस्थान-गोदावरी-विराजमानम्लेच्छोच्छेदितचिरकालधर्मसंस्थापनेन संस्कृतभाषामहाराष्ट्रभाषातैलङ्ग-कर्णाटभाषाचतुष्टयरचितनाटकराजचतुष्टयेन याचकजनकल्पनाकल्पद्रुमेण वसन्तसमयसमागत-समस्तसामन्तसीमन्तिनीसीमन्तसिन्दूरपूरदूरोद्धूलनप्रकटितप्रौढप्रतापेन निसर्गदुर्ग्रहदुर्गवर्गदुर्गम-प्राकारपरिखापरिपातपरिखिद्यमानपरिशङ्कितपरिजनपरिवीतप्रत्यर्थिनितम्बिनीलुण्ठकार्गलादीर्घ-भुजयुगलेन धीरोदात्तधीरशान्तधीरोद्धतधीरललित-चतुर्विधनायकगुणग्रामविचारचातुरीचतुरा-ननेन अष्टविधनायिकाहावभावविवेकोद्दामोद्दीपितस्मरविलोकनानुभूयमानश्रृङ्गाररससान्तरनिर-न्तरान्तरानन्देन नाटकनाटिकाख्यानाख्यायिकाप्रहेलिकाकलाकलापकौशल्येन[3] भारतीयरसदृष्टि-भावदृष्टिभावितभावनाभिनवभरताचार्येण नन्दिकेश्वरमतानुवर्त्तनाराधितत्रिनयनेन [4]परमपरा-क्रमार्जुनेनाथ बृहन्नटेन सतताराधितधर्मेणाथ वृकोदरेण श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन कालकालरात्रिरूपेण सततपराभूतसूर्यवंशीन्द्रसेनराजराज्यसंस्थापनदृढाङ्गीकारेण गुर्जरधरा-यवनकुलाधीशमहमदसुलतानधीरत्वोन्मूलनप्रचण्डपवनेन त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदवदहनदावानलेन प्रत्यर्थिपृथिवीपतितिमिरतति-निराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डमण्डिताखण्डभुजादण्ड-युगलेन भूमण्डलाखण्डलेन गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वसुंधरोद्धरणादिवराहेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन अनन्यमल्लीकगर्वखण्डनमुशलहस्तबलभद्र[5]-पराक्रमेण महाराजाधिराजमहाराणाश्रीमृगाङ्कतामराजेन्द्रनन्दनेन महाराज्ञीश्रीसौभाग्यवतीजसमाम्बिका-हृदयनन्दननेन विविधविज्ञानविज्ञचमत्कारचातुरीधुरीणसकलसीमन्तिनीशिरोमणिरूपलावण्य-लक्ष्मीनिधानश्रृङ्गाररसरसीशतराजकन्याप्रवरनिकुम्भराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवतीलषुमा-देवीहृदयाधिनाथेन राजाधिराजकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीत-मीमांसायां वाद्यरत्नकोशे अवनद्धोल्लासे पटहादिपरीक्षणं चतुर्थं वाद्यरत्नकोशश्च तृतीयः समाप्ति समगाविति विततमतीनामभिमतसिद्धिरस्तु ।

शुभं भवतु[6]

[1] G. मुक्त०  [2] A. G. ०राजवा······रतोडर०  [3] A. G. ०कौशले येन
[4] G. omits परा०  [5] G. ०बलदेव  [6] G. adds कल्याणमस्तु